

श्री गणेशाय नमः

कैलाशवासि स्वा० श्री १०८ पूर्णगिरि गुरुवराणाम्

स्मृतिकल्पलतायाः षष्ठं पुष्पम्

# "समस्त श्रीपरशुरामायणम्"

## श्रीपरशुराम सप्तशती

वीरप्रभा हिन्दीटीकया समलङ्कृता

।। ग्रन्थप्रणेता सम्पादकश्च ।।

गोलोकधामवासि वैद्यप्रवर पं० श्री चरणदासात्मज

**डा० विहारिलाल शास्त्री वासिष्ठः**

अध्यक्षचर ज्योतिषविभाग

श्रीरणवीर केन्द्रीय संस्कृत विद्यापीठ जम्मू

शास्त्रीनगर जम्मू (तविषी)

प्रकाशकः

कै. वा. श्री १०८ पूर्णगिरिगुरुचरणानां

शिष्यः

**श्री कुलदीप शर्मा**

नगरोटा (उपरेता)

बसोहली

२०००

प्रथमसंस्करण सं० ई० २०५६ वैक्रम

---

मुद्रकः- पं. हरिचन्द वैष्णवी प्रिंटिंगप्रेस बाइपास सिद्धाटवी (सेधड़ा)

(जम्मू-तविषी) १८०००६

श्री पूर्णाऽऽविर्भावः

जम्बूप्रान्ते तविषि सरितः स्रोतसां कल्पमूले
गौरीकुण्डे हिमगिरिसुतास्नानपुण्योदकेषु ।
अत्रेर्वंशे परमतपसाराधनाद्यैश्च धन्ये
गण्ये मान्ये द्विजवरगृहे जन्मपूर्णप्रभूणाम् ॥




श्रीपूर्णशिवसायुज्य प्राप्तिः

श्रावण
(श्री) पूर्णात्मानो रसयुगनखै २०५६ वैक्रमे [redacted] मा.
गौरीकुण्डे पथिकसुखदं रम्यहर्म्यं विधाय ।
कर्कस्थेऽर्के धवलदलभाक् पक्षतौ बुद्धवारे
योगेनान्त्ये जनुभुवि महादेवलोकं प्रपन्नाः ॥

## स्वा० श्री १०८ गुरुवरपूर्णगिरि प्रशस्तिः

जम्बुप्रान्ते तविषि सरितः स्रोतसां कल्पमूले
गौरीकुण्डे हिमगिरिसुतास्नानपुण्योदकेषु ।
शुद्धिक्षेत्रे जगति विदिते गोमुखीबाद्वितीये
गङ्गाद्वारे भुवनमहिते धूर्जटेः काशीकूटे ।१।

जातात्रैव प्रबरसरितां देबिका ब्रह्मसूत्रं
त्रेधावृत्वा तविषिसरितं दक्षबामभ्रमन्ती
उत्त्रवेण्यामुधमपुरभू मण्डले मन्दराहे
गुप्ता साक्षाद्भवति नियतं भूतलं पावयन्ती ।२।

अत्रैवंशे परमतपसाराधनाद्यैश्च धन्ये
गण्ये मान्ये द्विजवरगृहे जन्मपूर्णप्रभूणाम् ।
बाल्येऽपीमे सकलकृतिषु कौशलं वर्शमाना
भृत्ये कृत्येऽप्यधिकनिपुणाः सैनिकेष्वग्रगण्याः ।३।

भूत्यन्तेऽमी यतिवरगणे पूजनीयेषु पूज्याः
भूंढेवन्यां फणिधरपुरे कौघभड्डू मुनीशे ।
सुन्द्रीकोटे किशनपुरके सुःकरालालयेऽर्च्ये
माडा विश्वस्थलिपुरवरे सान्द्रिहट्टें च थें त्व ।४।

प्लेसक्षेत्रे लखनपुरभू भद्रबाहुपुराख्ये
कल्पालाख्ये नरनमुठिके छन्निनाम्नीह धाम्नि

वेदीदेवप्रतिमभवनानीह निर्मापयन्तः
यज्ञैर्यागैरनुदिनममी वेदिपूजानुसारम् ।५।

पौनः पुन्यं लखनपुरगा यज्ञशिक्षार्थमेते
रम्यं हर्म्यं सशिवशिवा शङ्कराचार्यमध्यम् ।
ऐरावत्या महितपुलिने यज्ञशालां विशालां
पञ्चप्रख्यैरचलनवलैः कुण्डकैः शोभमानाम् ।६।

वेदीमेकां स्थपतिरचितां दूरतो दीप्यमानां
निर्माप्याशु क्रतुवरहितं सेवकैः शिष्यवर्य्यैः ।
युक्तामुक्ता अपि च जगतां धन्यमान्या वदान्या
मर्यादाया ह्यचलदृढिमां शिक्षणार्थं प्रसक्ताः ।७।

।। इति पूर्णगिरिगुरुप्रशस्तिः ।।

❀ श्रीराघवेन्द्रोविजयतेतराम् ❀

# विश्वकल्याणार्थम् अतिविष्णुयाग महोत्सवः



ब्रह्मर्षि बाबा दूधाधारी जी

संवत् २०५० श्रावण प्र० ५ (२०-७-१९९३ ई०)

श्री ब्रह्मर्षिदूधाधारी जी वर्फानी आश्रम शास्त्रीनगर, जम्मू (तविषी)

॥ श्री राघवेन्द्रोविजयतेतराम ॥

## ॥ श्री १०८ श्रीब्रह्मर्षिदूधाधारी प्रशस्तिः ॥

दुग्धाधारी यतिवरप्रभुर्वैष्णवानन्दकारी
वेदोद्धारी प्रतिपदमहो विश्वतो यज्ञकारी ।
सिद्धाचारी स शणवसनो बाल्यतो ब्रह्मचारी
ब्रह्मानन्दं जनयति हृदि स्मर्तुरुद्धारकारी ।१।

नाम्नां धाम्नामुपधविरहेणाऽऽत्मसिद्धौ प्रसिद्धाः
पुण्यात्मानो द्विजसुरगवां सर्वदैवावधनाः ।।
यज्ञैरिष्ट्वा जनगणमनोहारि पर्जन्यहेतो—
र्धूमज्योतिः सलिलमरुतां सन्निपातं दधानाः ।२।

दुग्धाधारिमहात्मनां द्विजकुले जातं शतं जन्मना—
मित्थं मे प्रतिभाति सन्मुखधिया यज्ञव्रताभ्यासतः ।
नानातीर्थनिषेवणाद्गुरुकृपामासाद्य गोपालनाद्
देवानां सततार्चनात्षडक्षरजपादष्टाङ्गयोगार्जनात् ।३

वेदानां श्रवणाज्जगद्गुरुमुखान्मौनव्रतालम्बनात्
सच्छास्त्राचरणात्पुराण श्रवणात्पित्रर्चनान्नित्यशः ।
गायत्र्याविधिवज्जपन्द्विजमुखान्नित्यं पुरश्चर्यया
श्रौतस्मार्तमखैः सदेह जगतः कल्याण सञ्चिन्तनात् ।४

ब्रह्मर्षिप्रवरा जगद्गुरुवरा दृष्ट्वैक दृष्ट्या जगत्
दृस्राक्षं जितवन्त इत्थमपि ते जाताः सहस्राध्वराः ।
नानातीर्थवनादिषु हिमजलाशाय्याश्तपश्चर्यया
कृत्वाऽऽस्मानमतीव निर्मलमहो जगतां हिताय स्वयम् ।५

उड्डाङ्गासमवङ्ग मागधखसाऽऽसाकेत काशीगया
जम्बू श्रीनगर सद्दूधमपुराम्बाराम आर्यश्रियम् ।
राजोरी ह्याखनूर मानससरो अन्द्राह भड्डूगुढा
गङ्गायमुनसङ्गमं हरिहरद्वारोज्जयिन्याह्वयम् ।६।

क्षेत्रं नैमिषिकं समेत्य वदरीक्षेत्रं कुरूणां वरम्
गामं गाममहो सर्दाषप्रवराश्चान्त्ये स्मरन्तः प्रभुम् ।
न्यास्थञ्छी प्रभुदास वैष्णव कृते सत्कार्यभारं महत्
भारश्री वहतां सतां प्रभुवरा जीवन्तु कल्पावधिम् ।७

इति विहारिलाल वाशिष्ठ प्रणीता
श्री १०८ श्रीब्रह्मर्षिदुग्धारिमहात्मनां
॥ प्रशस्तिः समाप्ता ॥



देवकुल

ऋषिकुल मातृकुल

स्वेष्टकुल

गुरुकुल पितृकुल

विश्वकुल

देवताभ्यः

श्रीपरशुरामसप्तशतीमात्रं

श्रीपरशुरामायणात्मकं

सुपुष्पाञ्जलिं

सादरं समर्पयति

प्रणतोबद्धाञ्जलिर्विहारिलालशर्म वासिष्ठः









जम्बुसाम्बयोर्मध्यवर्तीसुमेलपुरवास्तव्य
विप्रवंशीय भूरिजातिमतो भरद्वाजगोत्रोद्भव
श्रीमद्गुरुवर्यगङ्गारामशर्मणांवंशावली
विद्याधर १..................कुबेर २
काशी
१ २ ३ ४ ५
गुटा शामू दामोदर मया पुत्राः
देवा रूपा १ गुडु २ कण्ठु ३ लक्ष्मू देसी कुनन्नू पुत्रवध्वाः
साधु रामकृष्ण
१ २ ३
दुर्गा हरदयालुः सोहनू
१ २ ३ ४
दुनी गोपाल भक्तराम रामचन्द्र
इन्द्र नमू बलभद्र
१ २ ३ ४ ५
प्रसन्नवदन अनन्तराम
दुर्योधन श्रीधर
१ २ ३ ४ ५ ६
परशुराम सद्गुण सन्तराम रामदास रामेश्वर वामदेव
नित्यानन्द
१ २ ३ ४
दीनानाथ अमरनाथ गौरीशंकर गंगाराम
चिन्तपूरणी
प्रेम किशोर

॥ ॐ श्रीगणेशाय नमः ॥

जम्बूसाम्बपुरोः सुमेलपुर सुग्रामो द्विजैर्मण्डितः
पूज्यैर्भूरिखजूर्दहोत्तर भट्टैर्गोस्वामि विष्णूत्तरैः
भूरि ज्ञातिभवेषु कर्मठगुर्विद्याधरः पण्डितः
भारद्वाजकुले कुशाग्रमतिमान् काशी च तस्यात्मजः ।१।

पुत्राःपञ्चमितास्तु तस्यसकला स्तुर्यस्तु काका ततो
दुर्गाद्यो हृदयालुमध्यमसुतः सोह्न कनिष्ठो भवत् ।
तस्माद्वै हृदयालुतः षडभवन् श्रीपर्शुरामोऽग्रजः
तस्मात्पुत्र चतुष्टयं ह्यभवद् गङ्गाभिरामोऽनुजः ।२।

(एष एव श्रीगङ्गारामाभिधो महात्मास्माकंलेखनायको वर्तते)

॥ श्री १०८ पं० गङ्गाराम प्रशस्तिः ॥

अस्तीह द्विपुष्करेषु जम्बुसाम्बपुरोर्मध्यवर्ति सुमेलपुर ग्रामवास्तव्य पुण्यपावन विप्रवंशीयभूरि ज्ञातिमतां भरद्वाजगोत्रोद्भव शास्त्रमात्रैक साधनस्य पण्डित विद्याधरस्य वंशावल्यां पण्डित-परशुरामशर्मणोगृहे स्वधर्मपत्न्यां षट्षष्ट्यधिकैकोनशतमिते-वै.१९६६ पोष प्र० ३१(१५ सितम्बर १९० ईशाब्दे प्रातर्ब्राह्ममुहूर्त वेलायां ४।२० वादने भाद्रशुक्लप्रतिपदि बुधे उत्तराफाल्गुनीभे शुभेयोगे किंस्तुघ्न करणे श्रोष्टम् ५५ घट्यात्मके सिंहलग्ने एकादश प्रसवे गङ्गाभिधया कन्यया सहितस्य श्रीगङ्गारामशर्मणोजनिरभवत् अतो जन्मकालिकीग्रहस्थितिरिहोपन्यस्यते ।

## ❀ जन्माङ्गम् ❀




एते जातकर्म नामकर्मादि संस्कृता: पितु: क्रोडस्था एव सन्ध्यामरकोशहोडाचक्रादिकाननिवार्य ग्रन्थानधीत्यैकादश वर्ष एव यज्ञोपवीत संस्कारोत्तरंपितृपादाभ्यां वियुक्ता षोडशाब्दे प्राथमिक कक्षामुत्तीर्यंग्रामाद्ग्रामान्तरं गामंगामं विद्वद्वरेभ्य: सारस्वत-व्याकरणायुर्वेद हितोपदेशरघुवंशमुहूर्तचिन्तामणि नीलकण्ठी ग्रह-लाघवादि ग्रन्थानधीत्य श्रीरामस्वरूपादि कथावाचकेभ्य: गीतवाद्या-दिष्वपि नैपुण्यमवाप्य चित्रनिर्माण कलासु च कौशलं लब्ध्वा ज्येष्ठभ्रातृवर्यस्यापि सपरिवारस्य निधनौत्तरं गौरीशंकरस्य पत्नी चिन्तपूरणी कन्यायुक्तैवावशिष्टा ज्येष्ठभ्रातुर्गौरीशंकर-स्यास्थिसंचयनार्थं हरिद्वारं गतो गङ्गारामा गृहमेत्य याजमानिककृत्य मवलम्ब्य कथादि पौराणिकवृत्त्या जन्मपत्रादि निर्माण कौशलेन गृह्य कृत्यान्सञ्चालयन्त: स्वीय त्रयोदशवर्षादेव गुरोर्मन्त्रंलब्ध्वा भक्तिमार्गे गुप्तरूपेण सञ्चालयन्तोऽष्टाशीतितमे वेक्रमेऽब्दे भ्रातुश्चातुर्वार्षिकं श्राद्धंसमाप्य स्वीयावुत्तनपुरमण्डल वास्तव्य

पण्डित गौरीशङ्करमिश्रेण सह हरिद्वारं प्राप्य एषामावुत्तस्तु विनायकमिश्रधर्मशालाया मुख्याध्यक्ष पदे कार्यमग्नोऽभवत् । एतेहि लक्ष्मणझूला तपोवने वर्षान्तमुषित्वा हीरानगरोपान्ते करोहलग्रामे सेवकान् कथादि श्रावण मध्यमेनोषित्वा पुनः १९९१, ९२, ९३, ९४ यावत् हरिद्वार नीलधारा कौलाश्रम स्वर्गाश्रमतपोवनादिषु वेदान्त दर्शनोपनिषदादान्महात्मभ्यः पठन्तस्तपश्चर्यां कुर्वन्तोऽतिष्ठन्। ततः २०११ शण्डारादिषु विश्वस्थलो वनो सुरथालय दोलादिषु तपश्चर्यया २०२३ वर्षे जम्मूनगरे भगवानुचक वास्तव्य भगवान्दास डाक्टरस्यपार्श्वे शम्भुदत्तज्योतिषीपार्श्वेच ममसान्निध्यंसमवाप्नुवन् । २०२४ वर्षे ऋषिव्रतसहायोऽहं श्रीमद्गुरूवर्यैःसह लक्ष्मणपुरात् विश्वस्थलोमार्गेण वनों प्राप्यैतेषां तपःस्थलीं प्रस्तरमयीं कुटींदृष्ट्वा अहं वनोनगरोय गोस्वामी श्री१०८ पूर्णगिरिमहात्मनां निर्मितधर्म शालायां वसन्नेव मासमात्रं ग्रीष्मावकाश समाप्तौ गृहं पुनरावृत्तः । तृतीयेऽब्दे २०२६ तमे वैक्रमेऽब्देऽहमाचार्यपरीक्षांदित्सुः काशीं प्राप्तश्चेतेषां देहच्छाया मया सह गच्छतीव प्रतीता भवतिस्म यदाहं ग्रन्थानां पारायणं कर्तुमुद्यतस्तदानीमेते मच्चेतसि विलक्षणान् विचारान् परावर्तयन्ति स्म । यदाहं परीक्षां दत्वा काशीतः पुनरावृत्तस्तदा लक्ष्मणपुरीय कष्टमाधिकारिणा मामुपेत्योक्तं यन्नारायण भगवन्तो भवन्तंस्मरन्तो वर्तन्ते तदाहं तेषां कुटीरेऽगच्छन्ततोमध्याह्न कालः प्रवृत्त आसीत् तेषामाज्ञया ऐरावत्यानहरे स्नानं विधाय सन्ध्यादितोऽवकाशं लब्ध्वा चिन्तितं यत्तेऽतीवरुग्णा आसन् तान् गृहीत्वा शीघ्रमहं गृहमुपेतः षड्दिनोत्तरं ममगृहे वैक्रम सं० २०२६ वैशाख प्र० २३ वैशाखकृष्ण चतुर्थ्यां सोमे सायं गोधूल्यां मुहूर्त वेलायां समाधिष्ठिता अभूवन् ।। एते

जीवनलीला समाप्ता ।

निर्वाण वेला:—कान्यालग्ने गुरुयुतः केतुः, तृतीये वृश्चिके भौमः, चतुर्थे धनुषि चन्द्रः, सप्तमे मीनस्थः राहुयुतो भृगुः, अष्टमे मेषे शनियुतः सूर्यः ।

एते सिद्धेश्वराः सर्वशास्त्रविशारदाविलक्षणराजयोगेश्वरा आसन् एतेषां यावन्त्यो विद्या आसन् तासां धूलिमात्रापि मया न स्वीकृता तेषामाशीराशिभिर्यदपि मया चिन्तितं तदेव सम्पन्नं जातमद्यावधि कोऽपि शङ्कातङ्कालयस्यावसरो न जातः । एतादृशालोकोत्तर गुरवो जन्मान्तरीय संस्कारैरेव लभ्यन्ते । एषामाशीराशिभिरन्येषां गुरूणां दत्ताः सकला विद्याअपि सफला हृदयङ्गमाश्चा भूवन् ।

गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुः साक्षान्महेश्वरः ।
गुरुरेव परब्रह्म तस्मै श्रीगुरवे नमः ॥

॥ श्रीगुरुचरणकमलेभ्यो नमः ॥



तुलसी

# भूमिका

ॐ जामदग्न्याय विद्महे रेणुपुत्राय धीमहि ।
तन्नो रामः प्रचोदयात् ॥

भूमिसहित देवताओं की प्रार्थना पर ध्यान देते हुए इन्द्र, सूर्य, ब्रह्म, विष्णु जी ने गाधिपत्नी पुरुकुत्सी एवं सत्यवती को पुत्र प्राप्ति के विषय में प्रेरणा देकर भृगु एवं ऋचीक से सन्तति प्राप्ति की याचना करवाई। स्वयं इनदेवताओं ने उक्त दोनों महर्षियों में आविष्ट होकर दो चरु तैयार किये एक में विष्णु वैष्णव तेजःस्वरूप एवं सूर्य, इन्द्र इन दोनों ने क्षात्रतेजः स्वरूप में वैष्णव तेजः के भीतर प्रवेश कर लिये। दूसरे चरु में ब्रह्मा और शिव (रुद्र) ने ब्राह्मरुद्र तेजःस्वरूप में प्रवेश किया। वैष्णवक्षात्र मिश्रित चरु गाधिराज की पत्नी के लिये एवं ब्राह्मरौद्र चरु सत्यवती के लिये तैयार किया। किन्तु प्रकृति विकृति वशात् पुरुकुत्सीने अपना चरु सत्यवती को देकर सत्यवती वाला स्वयं खालिया। उसके फलस्वरूप पुरुकुत्सी के विश्वरथ (विश्वामित्र) हुए। और सत्यवती के उग्र वैष्णवक्षात्र के लक्षणों को देख ऋचीक ने भृगु की आज्ञा से सत्यवती वेदना पर दया करते हुए पुत्र के स्थान में पौत्ररूप में उत्पन्न होने का वर दे दिया। तत्फल स्वरूप जमदग्नि रेणु के अष्टम गर्भ से इन्द्र सूर्य क्षात्रतेज से युक्त वैष्णव तेजः सम्पन्न परशुराम जी ब्रह्मकुल में क्षात्रक्षत्रोत्पन्न अवतारी पुत्र उत्पन्न हुए। जो ब्रह्मकुल मात्र में जन्मलेने से अक्षुण्ण

बालब्रह्मचारी हुए जिन में तपश्चर्या त्याग, एकान्तवास, समस्त दुर्वासनाओं से तटस्थता, निःशुल्क विद्याध्यापन, प्रायोपवेशनादि घोर व्रतों का अनुष्ठान करने को सामर्थ एवं किसी भी वस्तु की लिप्सा नहीं थी।

एवं गीतोक्त—

**शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।**
**ज्ञानं विज्ञानमास्तिक्य ब्रह्मकर्म स्वभावजम् ॥**

के सभी गुण केवल ब्रह्मकुल में उत्पन्न होने से कूट २ कर भरे थे। इसी के साथ क्षात्रक्षेत्र में विशेषतः इन्द्र, सूर्य, वैष्णवतेजः स्वरूप पूर्णक्षात्र चरुके प्रभाव से गीतोक्त—

**शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।**
**दानमीश्वर भावश्च क्षात्रं कर्मस्वभावजम् ॥**

अतः इन सभी क्षात्र लक्षणों से सम्पन्न परशुराम जी हुए। इसके अतिरिक्त हठ, युद्धशौण्डत्व, एवं कभी न हारना, एकमात्र सेना रहित समग्र शत्रुदल पर टूट कर भी पीछा न दिखाना; स्वेच्छा मरणादि वर प्राप्त होना। यह सब दैवचक्र था। अतः ऐसा न कोई अब तक उत्पन्न हुआ है न कभी उत्पन्न होगा। इस से वे एक गुणा ब्राह्मण थे एवं शतगुणा अधिक क्षत्रिय थे। उनके गुरु स्वयं ब्रह्मा एवं साक्षात् देवों के देव महादेव थे। उनको स्वयं भृगु, ऋचीक, जमदग्नि एवं ब्रह्मा ने भी समझाया शिव पार्वती जी ने शान्ति पूर्वक समझाया। संसार भर में किसी ब्राह्मण, ऋषि, मुनि, अन्य देवी देवता ने नाही साथ दिया और

नाही प्रोत्साहित करने का प्रयत्न ही किया। नाही वे किसी की सुनते ही थे। कई वार शस्त्र त्याग का व्रत किया किन्तु ऋषि मुनि स्त्री आदि पर आपत्ति आने पर पुनः शस्त्र ग्रहण करना ही पड़ा। भगवान् शङ्कर एवं जमदग्नि की आज्ञा से भगवान् रामजी को वैष्णव धनुष का धरोहर वैष्णव तेजः प्रदान हेतु सीता राम के विवाह के समय या महाभारत के अनुसार सीधा अयोध्या में जाकर श्रीराम जी की परीक्षा के लिये उच्चावच शब्दों का प्रयोग करने का लक्ष्य ये था कि कहीं दशरथ दो हुए दिलीप दो हुए वहीं कहीं राम भी दूसरे ही धनुष को प्राप्त कर लेने पर अनर्थ न हो जाये इसी लक्ष्य से कड़ी परीक्षा लेकर ही उनको वैष्णव धनुष और वैष्णव तेज का धरोहर सोम्पने का लक्ष्य निभाया था। महाभारत में लिखा है कि ऋचीक नन्दन परशुराम जी ने एकवार सुना कि अयोध्या में असम्भव कृत्य को सम्पादन करने में क्लेश का अनुभव न करने वाले भगवान् राम दशरथ जी के पुत्र हैं तो इस जिज्ञासा के लिये परशुराम जी अयोध्या में आपहूंचे। यह सुन कर दशरथ जी कहीं अन्य देश में चले गये। और परशुराम जी राम जी के पास जाकर हंसते हुए बोले हे राम सतयुग के अन्त से लेकर यह पिता जी का दिया हुआ वासुकिनाग की कंचुली में सुरक्षित वैष्णव धनुष धरोहर के रूप में सम्भाल रखा है लीजिये और इस पर ज्या आरोपण कर सकते हों तो कीजिये यह सुन रामजी ने उत्तर दिया कि आप ऐसा आक्षेप नहीं करें मैं भी उन क्षत्रियों की तरह अधम नहीं जिनको आपने नष्ट किया है मैं इक्ष्वाकु कुल में उत्पन्न होने से व्यर्थ डींग नहीं हांकता। इस पर परशुराम जी ने कहा कि बहाने

मत करें धनुष को खींचें तब राम जी ने क्रोध में आकर वैष्णव धनुष की ज्या चढाकर ज्या शब्द किया। उस शब्द से वज्राघात की तरह भूतल के सभी प्राणी भयभीत हो गये। श्रीराम जी ने कहा कि अब बताइये क्या आज्ञा है ? तब परशुराम जी ने उनको बाण देकर कहा इसको चढाकर कान तक खींचिये। तब श्रीराम जी ने अग्नि की तरह प्रदीप्त होकर कहा कि सुना भी जाता है सहन भी किया जाता रहा किन्तु आज पता लगा कि आप दर्प पूर्ण भी हैं। तूं ने क्षत्रियों का तेज इकट्ठा किया है इसी लिये मेरे पर आक्षेप कर रहे हैं। मुझे वास्तव रूप में देखिये मैं आपको चक्षुः प्रदान करता हूं। तब भार्गव परशुराम जी ने भगवान् राम के विराट् शरीर में द्वादश आदित्य, आठवसु, एकादश रुद्र, ७६१ साध्य एकोन पञ्चाशत् ४६ मरुत्, ४६ पितर, ४६अग्नि, ४६नक्षत्र, ६ नवग्रह, गन्धर्व, राक्षस, यक्ष, नदियें, तीर्थ, ६० हजार बालखिल्य ऋषि, सनातनादि ४ ब्रह्म स्वरूप ऋषि, समुद्र, पर्वत, वेद, उपनिषद्, वषट्कार, अखिलयज्ञ, चिन्मय समग्र सामवेद धनुर्वेद, मेघ समूह, विद्युत सहित ६० वर्ष उस राममय विराट् स्वरूप भगवान् विष्णु ने उस बाण को छोड़ा। शुष्क वज्र के समान वह फैल गया, उस से उल्काएं, धूलि, बादल बर्षण से भूतल व्याप्त होकर भूकम्प होने लगा वात्या के आघात से घोर निर्घात शब्दादि से उस परशुराम को व्याकुल कर बाण पुनः ज्वलन्त हो लौट आया। उधर व्याकुल होकर पुनः चेतनता को प्राप्त कर भगवान् विष्णु को प्रणाम किया। विष्णु स्वरूप भगवान् राम की अनुज्ञा से पुनः महेन्द्र पर्वत पर आगये एक वर्ष भर तेजो रहित, मदहीन, दुःखी देखकर आकाश में पितरों ने आकर कहा

कि--हे पुत्र ! आपने विष्णु को पाकर भी अच्छा नहीं किया। वही तीनों में सदा पूज्य एवं मान्य रहेगा। अब तुम वधूसरकृत नामक भृगुतीर्थ में जाओ वहां तीर्थों में स्नान कर दीप्तोद नामक एक तीर्थ है यहां तेरे वृद्धप्रपितामह भृगु जी ने देवयुग में उत्तम तप किया है इतना पितरों का वचन सुनकर श्री परशुराम जी वहां जाकर वधूसर तीर्थ में स्नान कर दीप्तोद तीर्थ में पुनः उस वैष्णव तेज को प्राप्त किया। पुनः विष्णुरूप को प्राप्त होकर श्रीपरशुराम जी कृतकृत्य हो गये ॥

महाभारत वनपर्व ६६ अध्याय

यह सब उनके दीर्घब्रह्मचर्य कुमारपन के दोष थे। कुमार पन में देव, विद्याधर, गन्धर्व, किन्नर, यक्ष, राक्षस, भूत, पिशाच, गुह्यक एवं सिद्ध लोग आविष्ट होकर कई प्रकार के अनर्थ करवा देते हैं। अतः ब्रह्मचर्य केवल २४ वर्ष तक ही दृढ रहना चाहिए फिर विवाह होने पर केवल एकनारी सदा ब्रह्मचारी रहेते तो सभी प्रकार के उपद्रवों से सुरक्षित रहता है। कुमार पुरुष ब्रह्मचारी रहने पर भी उसकी कभी गति नहीं होती। अतः सभी के लिये विवाह कर गृहस्थधर्म निभाना परमोपयोगी है।

नृसिहपुराण, रामायण, हनुमन्नाटकादि नानाग्रन्थों के मतानुसार परशुराम जी श्री सीता स्वयम्बर में शिवधनुष के टूटते ही धनुर्यज्ञ में परशुराम जी आजाते हैं कोप पूर्ण शब्दावली का प्रयोग करते हैं इसी विषय में लक्ष्मण परशुराम संवाद बहुत से नाटकों या रामायण ग्रन्थों में रोचक एवं वीररसपूर्ण शब्दावली में उपलब्ध होते हैं किन्तु कौशल्यानन्दन रामजी मौन ही रहते हैं। अन्त मे रामजी विनयपूर्वक कहते हैं कि—

**बाह्वोर्बलं न विदितं न च कार्मुकस्य**
**त्र्यम्बकस्य महिमा न तवापि सेषः ।**

तच्चापलं परशुराम ! मम क्षमस्व
डिम्भस्य दुर्विलसितानि मुदे गुरूणाम् ।१।

अयं कण्ठः कुठारस्ते कुरु राम ! यथोचितम् ।
निहन्तुं हन्त गो विप्रान्न शूरा रघुवंशजाः ।२।

भो ब्रह्मन्भवता समं न घटते संग्रामवार्तापि नो
सर्वे हीनबला वयं बलवतां यूयं स्थिता मूर्धनि ।।
यस्मादेक गुणं शरासनमिदं सुव्यक्तमुर्वीभुजा-
मस्माकं भवतो यतो नवगुणं यज्ञोपवीतं बलम् ।३।

जातःसोहं दिनकरकुले क्षत्रियः श्रोत्रियेभ्यो
विश्वामित्रादपि भगवतो दृष्टदिव्यास्त्रपारः ।
अस्मिन्वंशे कथयतु जनोदुर्यशो वा यशो वा
विप्रे शस्त्र ग्रहण गुरुणः साहसिक्याद् बिभेमि ।४।

स्त्रीषु प्रवीर जननी जननो तथैव देवी स्वयं भगवती गिरिजापि यस्यै
त्वद्दोर्वशीकृत विशाखमुखावलोक व्रीडाविदीर्णहृदया स्पृहयाम्बभूव ५

इसी प्रकार और भी भगवान् राम जी ने बहुत से नीति पूर्वक वचन कहे हैं। अतः परशुराम जी पर लिखते ही जायें तो बाल्मीकि रामायण से भी बहुत बड़ा रामायण बन सकता है। यह तो केवल परशुरामायण का संक्षिप्त विषयसूचीपत्र बन पाया है।

आशा है कि विद्वज्जन इस विषय में लब्ध त्रुटियों का संशोधन कर सहानुभूतिपूर्ण मार्ग प्रदर्शन करेंगे ।

श्रीवसन्त पञ्चमी महोत्सवः श्रीमतां विदुषां वशंवदः-
वैक्रम सं.२०५६माघ प्र० २८ गु.वा. विहारिलालशास्त्री वासिष्ठः
आर्ष विहारि विहार २३. श्रीरघुनाथ पुरी जम्मू, तवियी

विश्वप्रसिद्ध
भारतीयसंस्कृति एवं संस्कृत के
पुनरुद्धारार्थ नानाविद्यापीठों व
नाना सं. सं. संस्था संस्थापक
परमश्रद्धेय डा. मण्डनमिश्र जी



कुलपति
सम्पूर्णानन्द सं. विश्वविद्यालय
वाराणसी
मेरे सम्पादनक्षेत्र के प्रारम्भिक
श्रीगणेशविधाता

सम्पादन क्षेत्र के मार्गदर्शक
आदरणीय प्रो० रामचन्द्रपाण्डेय



ज्योतिर्विभागाध्यक्ष
प्रधानसम्पादक विश्वपञ्चाङ्ग
काशीहिन्दू विश्वविद्यालय
वाराणसी—५

पं. काकारामशास्त्री का० ती०



साहित्यमर्मज्ञ

पं. मदनमोहनशास्त्री का० ती०



ज्यो० सा० मर्मज्ञ

पं. परशुरामशास्त्री व्या. आ.



प्राचार्यचर

पं० रमाकान्तशास्त्री भारद्वाज



आयुर्वेदाचार्य

पं० श्रीपूर्णचन्द्रशास्त्री ज्यो. आ.



भू० पू० प्राचार्य

श्री श्रीचन्द्रपाण्डेय जी



व्या. सा. सि. ज्यो. मर्मज्ञ

पं० श्रीमूलराजशास्त्री व्या.अ.



प्राचार्यचर

पं० श्रीरामशरणशास्त्री का. ती.



प्राचार्य चर सं. वि. बीरगंज

सर्वतन्त्र स्वतन्त्र



सिद्धिविनायक श्रीवाचस्पति शास्त्री

परशुरामायण प्रणेता



विहारिलालवासिष्ठ

श्रीयुत पं० ज्वालासहाय जी भारद्वाज



श्रीमज्ज्वाला सहायाख्यं कौमुदीकण्ठभूषणम् ।
प्रणमामि गुरुं भक्त्या नित्यं वैकुण्ठ वासिनम् ॥

# श्री रघुनाथ संस्कृत कालेज जम्मू (काश्मीर)

—* शास्त्री श्रेणी *—

॥ १ चैत्र १९९४ ॥



आदित्य, गङ्गादत्त, केशवानन्द, देवीरमल, चन्द्र शेखर, रामदत्त, विश्वेश्वर, सुखदेव;

गङ्गाधर, रामजीवन, प्रेमचन्द्र, रामनाथ, भवानीदत्त, सोहनलाल, हरिकृष्ण;

[illegible] जी, पं० चन्द्रमौलि जी, पं० मदन मोहन जी, पं० चन्द्रमणि जी;

## ...श्री रघुनाथ संस्कृत कालेज जम्मू [काश्मीर]

२० चैत्र १९९५ आनर्ज़ (शास्त्री)



मोहन लाल शा० — बलजी नाथ शा० — श्री हर्ष शा० — राम दत्त शा० — गौरी शङ्कर शा०

हरवंश लाल शा० — हरि दत्त शा० — श्री घनश्याम मिश्र शा० — गौरी दत्त शा० — चन्द्रशेखर शा० सा० के० — गङ्गा दत्त विनोद शा०

...धर जी शा० (न्याय) — पं० परशु राम जी शा० प्रो० (व्याकरण) — पं० श्री चन्द्र जी न० दाइम वि० प्रो० (वेद) — रा० पं० बालकृष्ण जी शा० (प्रिंसिपल) — पं० भोला नाथ जी शा० बी० ए० (प्रो० वेदान्त) — पं मदन मोहन जी शा० (प्रो० ज्योतिष) — पं काका राम जी शा० (प्रो० अलङ्कार)



सर्वतन्त्र स्वतन्त्र पदवाक्य प्रमाण पारावारीण प्रवणानां श्रीमतां वागीश्वर गुरुवर्याणाम् ।

## ❀ आशीराशंसना ❀

। चिच्चक्रेशाय नमः ।

वैद्यप्रवर श्रीचरणदासात्मज कृतिवर श्रीविहारीलाल महाभागानां स्वोपज्ञां जामदग्न्यीय पुरावृत्तान्वयि गुणगणार्णव समुपवर्णनप्रवणां श्रीपरशुराम सप्तशतीं निष्पक्षज्ञप्ति पद्यानुसरणेनाभिसमीक्ष्य, अमन्दानन्दमहार्णवे वुडन सौहित्यं समध्यगायि मया । वाचां तथा योषितां विषये, अवचनीयता दुर्लभैवेति सर्वविदाम् ।

खलबहुले स्वार्थानुस्यूतेऽस्मिन्ननेहसीदृशमध्यवसाय-माश्लिष्य, निःस्वार्थतया सुरभारतीविकस्वरप्रसाराय तत्रभवतामयं प्रतियत्नो नियतं श्रेयसे भविष्यतीति

चतुरस्रमनवद्यम् । एनामभिवीक्ष्य विद्याविलासिषु परितस्तया प्रसरन्ती, अपोगण्डताप्यवश्यं मन्दाक्षमन्दतामुपैष्यतीत्यनाकुलम् ।

अनितरसाधारणीं चेतनामञ्चता लेखकमहोदयेन ज्योतिषकर्मकाण्डादि विषयेष्वपि स्वलेखन्या-अस्तोकमुपकृतमित्यतोऽनुपधमार्हन्तो भावत्कमस्माभिव्यज्यत इति ।

किम्बहुना-इयमेकैव कृतिः सुमनो मनोमौनमुद्रोन्मुद्रणं विदधती साम्प्रतिके कुण्टिसभाजेहर हास, हरावास, हर हारनिभप्रभां, भावत्कीं कीर्त्तिवैजयन्तीं दिगन्तप्रान्तेष्वप्यप्रातिस्विकरूपेण संस्थापयिष्यतीति किमधिकं धीधनचुञ्चुष्विति --

फाल्गुनकृष्णचतुर्थी                                   विद्वद्विधेयो-
बुधवासरः                                   वागीश्वरः
वैक्रम सं० २०५६                                   (घोरडी-अभिजनः)

॥ स्कन्दोक्त: ॥

# ❀ श्री गुरुस्तवराज: ❀

ॐ श्री सद्गुरवे नमः ॐ अस्य श्री गुरुगीतामालामन्त्रस्य ईश्वर ऋषिः । अनुष्टुप्छन्दः । श्री सद्गुरुर्देवता चतुर्वर्ग सिद्ध्यर्थे जपे विनियोगः ।

**सद्गुरवे नमः अङ्गन्यासः कर हृदयादिषु ॥**

॥ ऋषय ऊचुः ॥

गुह्याद्गुह्यतरा विद्या गुरुगीता विशेषतः । त्वत्प्रसादाच्च श्रोतव्या तत्सर्वं ब्रूहि मे सूत ॥

॥ सूत उवाच ॥

कैलाश शिखरे रम्ये भक्तिसाधनदायकः । प्रणम्य पार्वतीं भक्त्या शङ्करं परिपृच्छति ॥१॥

॥ श्री पार्वत्युवाच ॥

ॐ नमो देव देवेश परात्पर जगद्गुरो । सदाशिव महादेव गुरुदीक्षां प्रदेहि मे ।२।
केन मार्गेण भो देव देही ब्रह्ममयो भवेत् । तत्कृपां कुरु मे देव नमामि चरणं तव ।३।

॥ श्री ईश्वर उवाच ॥

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाश्यन्ते महात्मनः ।४।
मम रूपासि देवि त्वं त्वत्प्रीत्यर्थं वदाम्यहम् । लोकोपकारकं प्रश्नं तव प्रीत्या वदामि ते ।५।
दुर्लभं त्रिषु लोकेषु तच्छृणुष्व वदाम्यहं । किञ्चिद्गुरुं विना नान्यत्सत्यं सत्यं वरानने ।६।

वेदशास्त्रपुराणानि सेतिहासादिकानि च । यन्त्रमन्त्रादि विद्यानां स्मृतिरुच्चाटनादिकम् ।७।
शैवशाक्ताऽऽगमादीनि अन्यानि बहुमतानि च । अपभ्रंश समस्तानि जीवानां भ्रान्तचेतसाम् ।८।
वेदशास्त्र पुराणानि कृत्वा वै गुरु काम्यया । स्वयं लोकगुरुः साक्षात् जायते वेदतत्त्ववित् ।९।
यज्ञव्रततपोदानं जपतीर्थं तथैव च । गुरुतत्वमविज्ञाय मूढास्ते चेतरे जनाः ।१०।
गुरुबुद्ध्यात्मनो नान्यत् सत्यं सत्यं न संशयः । तल्लाभार्थं प्रयत्नेन कर्तव्यं च मनीषिभिः ।११।
गूढविद्या जगन्माया देहमज्ञानसम्भवम् । उदयं स्वप्रकाशेन गुरुशब्देन कथ्यते ।१२।
देही ब्रह्मभवेद्यस्मात्त कृपार्थं वदाम्यहम् । सर्वपापविशुद्धात्मा श्री गुरोःपादसेवनात् ।१३।
सर्वतीर्थावगाहस्य प्राप्नोति स फलं नरः । गुरुपादोदकं पीत्वा जलं शिरसि धारयेत् ।१४।
शोषणं पापपंकस्य दीपनं ज्ञानतेजसः । गुरुपादोदकं सम्यक् संसारार्णवतारकम् ।१५।
अज्ञानमूलहरणं जन्मकर्मनिवारणम् । ज्ञानवैराग्यसिद्ध्यर्थं गुरुपादोदकं पिबेत् ।१६।
गुरुपादोदकं पानं गुरोरुच्छिष्टभोजनम् । गुरु मूर्ति सदाध्यानं गुरुस्तोत्रं सदा जपेत् ।१७।
काशीक्षेत्रंनिवासं च जाह्नवी चरणोदकम् । गुरुर्विश्वेश्वरः साक्षात्तारकं ब्रह्म निश्चितम् ।१८।
शिरः पादाङ्कितं कृत्वा गयायां सोऽक्षयी वटः । तीर्थराजः प्रयागोऽसौ गुरुमूर्त्यै नमोनमः ।१९।
गुरु मूर्ति स्मरेन्नित्यं गुरोर्नाम सदा जपेत् । गुरोराज्ञां प्रकुर्वीत गुरोरन्यन्न भावयेत् ।२०।
गुरोर्वक्त्र स्थितं ब्रह्म प्राप्यते तत्प्रसादतः । गुरुमूर्तेः सदाध्यानं यथा स्वैरिह पोषितः ।२१।
स्वाश्रमं च स्वजातिं च स्वकीर्त्ति पुष्टिवर्धनम् । अन्यत्सर्वंपरित्यज्य गुरुमात्मनि भावयेत् ।२२।
अनन्याश्चिन्तयन्तो मां सुलभं परमं पदम् । तस्मात्सर्वप्रयत्नेन गुरोराराधनं कुरु ।२३।
गुरुवक्त्रे स्थिताविद्या गुरुभक्त्या तु लभ्यते । त्रैलोक्ये स्फुटवक्तारो देवाद्या सुरपन्नगाः ।२४।
गुकारो अन्धकारःस्याद् रुकारस्तेज उच्यते । अज्ञान नाशकं ब्रह्म गुरुर्देवो न संशयः ।२५।

गुकारः प्रथमोवर्णो मायादिगुणभासकः । रुकारो द्वितीयं ब्रह्म मायाभ्रान्तिबिमोचकः ।२६।
एवं गुरुपदं श्रेष्ठं देवानामपि दुर्लभम् । हाहा हूहू गणश्चैव गन्धर्वाद्यैर्यश्च पूज्यते ।२७।
एवं तेषां च सर्वेषां नास्ति तत्वं गुरोःपरम् । आसनं शयनं वस्त्रं वाहनं भूषणादिकम् ।२८।
साधकेन प्रदातव्यं गुरुसंतोष कारणम् । गुरोराराधनं कार्यं जीवत्वं वै निवेदयेत् ।२९।
कर्मणा मनसा वाचा सद्भिराराधयेद्गुरुम् । दीर्घदण्डं नमस्कृत्य निर्लज्जो गुरु सन्निधौ ।३०।
शरीरमर्थं संप्राप्तं पशुपुत्रं गृहाणि च । आत्मा दारादिकं चैव सद्गुरुं संन्निवेदयेत् ३१।
कृमि कीट भस्म विष्ठा दुर्गन्ध मलमूत्रकम् । श्लेष्मा रक्तं तथा मांसं तनुरित्थं वरानने ।३२।
संसारवृक्षमारूढं पतन्तं नरकार्णवे । येनोद्धृतमिदं सर्वं तस्मै श्री गुरवे नमः ।३३।
गुरुर्ब्रह्मा गुरुविष्णुर्गुरुदेवो महेश्वरः । गुरुरेव परब्रह्म तस्मै श्री गुरवे नमः ।३४।
अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया । चक्षुरुन्मीलितं येन तस्मै श्री गुरवे नमः ।३५।
अखण्डमण्डलाकारं व्याप्तं येन चराचरम् । तत्पदं दर्शितं येन तस्मै श्री गुरवे नमः ।३६।
स्थावरं जंगमं व्याप्तं यत्किञ्चित्सचराचरं । तत्पदं दर्शितं येन तस्मै श्री गुरवे नमः ।३७।
चिन्मयं व्यापितं सर्वं त्रैलोक्यं सचराचरम् । असि पदं दर्शितं येन तस्मै श्री गुरवे नमः ।३८।
सर्वश्रुतिशिरोरत्नं विराजितं पदाम्बुजम् । वेदान्तगर्भसूर्याय तस्मै श्री गुरवे नमः ।३९।
चैतन्यं शाश्वतं शान्तं व्योमातीतं निरंजनम् । विन्दुनादं कलातीतं तस्मै श्री गुरवे नमः ।४०।
चिन्मात्रं सच्चिदानन्दं चिदाभासं चिदात्मकम् । चित्स्वरूपं चिदाकारं चैतन्यं चिन्मयं गुरुम् ।४१।
यस्य स्मरणमात्रेण ज्ञानमुत्पद्यते स्वयम् । सदैव सर्वसम्पत्तिः तस्मै श्री गुरवे नमः ।४२।
स्थावरं स्वम्बरं शान्तं जङ्गमं चरमेवच । येन व्याप्तं जगत्सर्वं तस्मै श्री गुरवे नमः ।४३।
ज्ञानशक्ति समारूढं तत्वमाला बिभूषणम् । भुक्ति मुक्ति प्रदातारं तस्मै श्री गुरवे नमः ।४४।

अनेक जन्म संप्राप्तं कर्मबन्धविदाहकम् । स्वात्मज्ञानप्रकाशेन तस्मै श्री गुरवे नमः ।४५।
शोषणं भवसिन्धोश्च दीपनं क्षारसम्पदाम् । गुरुपादोदकं सम्यक् तस्मै श्री गुरवे नमः ।४६।
न गुरोरधिकं तत्वं न गुरोरधिकं तपः । तत्वज्ञानात्परं नास्ति तस्मै श्री गुरवे नमः ।४७।
मन्नाथस्त्रिजगन्नाथो मद्गुरुस्त्रिजगद्गुरुः । ममात्मा सर्व भूतात्मा तस्मै श्री गुरवे नमः ।४८।
ध्यानमूलं गुरोर्मूर्त्तिः पूजामूलं गुरोःपदम् । मन्त्र मूलं गुरोर्वाक्यं मोक्षमूलं गुरोःकृपा ।४९।
गुरुरादिरनादिश्च गुरुः परमदैवतम् । गुरोःपरतरं नास्ति तस्मै श्री गुरवे नमः ।५०।
सप्तसागरपर्यन्त तीर्थस्नानादिकं फलम् । गुरोरङ्घ्रिजलं विन्दुः सहस्रांशेन दुर्लभम् ।५१।
गुरुरेव जगत्सर्वं ब्रह्मविष्णुशिवात्मकम् । गुरोःपरतरं नास्ति तस्मात्संपूजयेद्गुरुम् ।५२।
ज्ञानात्परं मुक्तिपदं लभते गुरुभक्तितः । गुरुसमं यतोनास्ति ध्येयोऽसौ गुरुमार्गिणाम् ।५३।
यस्मात्परतरं नास्ति नेति नेतीति वै श्रुतिः । मनसा वचसा चैव सर्वदाऽऽराधयेद्गुरुम् ।५४।
गुरुकृपा प्रसादेन ब्रह्मा विष्णुः सदाशिवः । सामर्थ्यन्तत्प्रसादेन केवलं गुरु सेवया ।५५।
देव किन्नर गन्धर्वाप्सरो यक्षचारणाः । मुनयोऽपि न जानन्ति गुरोः शुश्रूषणा विधिम् ।५६।
सदाहङ्कारगर्वेन तपोविद्या बलान्वितः । संसारकुहरावर्त्ते घटयन्त्रे घटो यथा ।५७।
न मुक्ता देव गन्धर्वाः पितरो यक्ष किन्नराः । ऋषयः सर्वसिद्धाश्च गुरुसेवा पराङ्मुखाः ।५८।
ध्यानं शृणु महादेवि सर्वानन्दप्रदायकम् । सर्वसौख्यकरं नित्यं भुक्ति मुक्ति विचारदम् ।५९।
श्री मत्परं ब्रह्म गुरु स्मरामि श्रीमत्परं ब्रह्म गुरुं नमामि । श्रीमत्परं ब्रह्मगुरुं वदामि श्रीमत्परं ब्रह्म गरुं भजामि
ब्रह्मानन्दं परमसुखदं केवलं ज्ञानमूर्तिम् । द्वन्द्वातीतं गगनसदृशं तत्वमस्यादिलक्ष्यम् ।
एकं नित्यं विमलमचलं सर्वदा साक्षिभूतम् । भावातीतं त्रिगुणरहितं सद्गुरुं तं नमामि ।६१।

नित्यं शुद्धं निराभासं निराकारं निरंजनम् । नित्यंबोधंचिदानन्दं गुरुं ब्रह्म नमाम्यहम् ।६२।
हृद्यम्बुजे कर्णिका मध्यसंस्थं सिंहासने संस्थित दिव्यमूर्त्तिम् । ध्यायेद्गुरुं चन्द्रकलावतंसं सच्चित्सुखाभीष्टवरंनिधानम
श्वेताम्बरं श्वेतविलेपपुष्पं मुक्ताफलैर्भूषितदिव्यमूर्त्तिम् । वामाङ्कपीठस्थितदिव्यशक्तिं मन्दस्मितं पूर्णकृपानिधानम्
रत्ताःस्मते नाथ पदारविन्दं बुद्धोन्द्रियं प्राणमनोवचोभिः। यश्चिन्त्यते तेङ्घ्रिषुभाव युक्तैर्मुमुक्षुभिः कर्ममयोपशान्त्यै
आनन्दमानन्दकरं प्रसन्नं ज्ञानस्वरूपं निजबोधयुक्तम् । योगीन्द्रमीड्यं भवरोगवैद्यं श्रीमद्गुरुं नित्यमहं नमामि६६
वन्दे गुरूणां चरणारविन्दं सन्दर्शितं स्वात्मसुखाम्बुधीनाम्। येषां जनानां गलजायमाणां संसार हालाहलमोहशांन्त्यै
यस्मिन्सृष्टि स्थिति ध्वंसं विधानं निग्रहात्मकम् । कृत्यंपञ्चविधंशश्वद्भासते तं नुमः शिवम् ।६८।
प्रातः शिरसिशुक्लाब्जे द्विनेत्रं द्विभुजं गुरुम् । वराभयप्रदं शान्तं स्मरेत्तन्नामपूर्वकम् ।६९।
शिव क्रोधे गुरुस्त्राता गुरुक्रोधे शिवो न हि । कालमृत्योर्भयाद्वापि गुरूरक्षेत्तु पार्वति ! ।७०।
न गुरोरधिकं न गुरोरधिकं न गुरोरधिकं न गुरोरधिकम् । शिवशासनतः शिवशासनतः शिवशासनतः शिवशासनतः
इदमेव शिवन्त्विदमेव शिवन्त्विदमेव शिवन्त्विदमेव शिवम्। ममशासनतो ममशासनतो ममशासनतो ममशासनतः
एवं विधंगुरुं ध्यात्वा ज्ञानमुत्पद्यते स्वयम् । तदा गुरोः प्रसादेन मुक्तोहमिति भावयेत् ।७३।
गुरूणां दर्शिते मार्गे मनः शुद्धीश्च कारयेत् । अनित्यं खण्डयेत्सर्वं यत्किंचिदात्मगोचरम् ।७४।
ज्ञेयं सर्वमनित्यञ्च ज्ञानञ्च मनउच्यते । ज्ञानं ज्ञेयं समं कुर्य्यान्नान्योऽस्त्यर्थो द्वितीयकः ।७५।
एवं श्रुत्वा महादेवि गुरोर्निन्दां करोति यः । स याति नरकं घोरं यावच्चन्द्र दिवाकरौ ।७६।
यावद्द्हान्त कल्पोस्ति तावद्देवि गुरुं स्मरेत् । गुरुलोपो न कर्तव्यः स्वच्छन्दोयदि भावयेत् ।७७
गुरोरग्रे न वक्तव्यं क्वाप्यसत्यं कदाचन । यो वै हुंकृत्य तुं कृत्य गुरुं निर्जित्य वादतः ।७८।
अरण्ये निर्जलदेशे स भवेद् ब्रह्मराक्षसः । मुनिभिः पन्नगैर्वापि सुरैर्वा शापितो यदि ।७९।
कालमृत्युभयाद्वापि गुरूरक्षति पार्वति । अशक्ता हि सुराःसर्वे ह्यशक्तामुनयस्तथा ।८०।

गुरुशापहताःक्षीणा क्षयं यान्ति न संशयः । मन्त्रराजमिदं देवि ! गुरुरित्यक्षरद्वयम् ।८१।
श्रुतिवेदान्तवाक्येन गुरुः साक्षात्परं पदम् । श्रुतिस्मृतिमविज्ञाय केवलं गुरुसेवया ।८२।
ते वै संन्यासिनः प्रोक्ता इतरे वेषधारिणः नित्यं ब्रह्म निराकारं निर्गुणं बोधयेत्परम् ।८३।
पूर्णब्रह्म निराभासं दीपो दीपान्तरं यथा । गुरुकृपा प्रसादेन आत्मारामो हि लभ्यते ।८४।
अनेन गुरुमार्गेण स्वात्मज्ञानं प्रवर्त्तते । आब्रह्मस्तम्बपर्यन्तं परमात्मस्वरूपकम् ।८५।
स्थावरं जङ्गमं चैव प्रणमामि जगन्मयम् । वन्देऽहं सच्चिदानन्दं भेदातीतं परं गुरुम् ।८६।
ज्ञानात्मवान्स भवेत्तु नित्यं यो वै स्मरेद् वपदाब्जभृङ्गम् ।
अत्यन्त विज्ञान घनं विशुद्ध सोऽहं चिदानन्दविकारहीनम् ।८७।
नित्यं पूर्णं निराभासं निराकारं निरञ्जनम् । नित्य बोधं चिदानन्दं गुरुं ब्रह्मनमाम्यहम् ।८८।
हृद्याकाशमध्यस्थं शुद्धस्फटिकसन्निभम् । स्फटिकप्रतिभारूप दृश्यते दर्पणं यथा ।८९।
तथात्मानं चिदाकारं आनन्दं सोहमिज्यते । अंगुष्ठमात्र पुरुष ध्यायन्तं चिन्मयं हृदि ।९०।
तत्रस्फुरति यो भावः श्रुत्वा तं कथयाम्यहम् । अगोचरं तथागम्यं रूप नामादि वर्जितम् ।९१।
निःशब्दं तु विजानीयात्स्वभावं ब्रह्म पार्वति । तथा निजस्वभावेन तथा ब्रह्म च शाश्वतम् ।९२।
स्वयं सर्वं मयोभूत्वा स्थातव्यं यत्र कुत्रचित् । कीटोभृङ्गरिवध्यानं यथा भवति तादृशम् ।९३।
गुरुध्यानं तथा नित्यं देही ब्रह्ममयो भवेत् ।९४।

।। श्री पार्वत्युवाच ।।

पिण्डेऽप्यण्डे तथा रूपे मुक्तास्ते नात्र संशयः । पिण्ड किमु महादेव पदं कि समुदाहृतम् ।९५।

।। श्री महादेव उवाच ।

रूपं रूपान्वित चैव एतदाख्याहि शङ्करः । पिण्डं कुण्डलिनिशक्ति पदं हंसमुदाहृतम् ।९६।
रूपं बिन्दुरिति ज्ञेयं रूपातीत निरञ्जनं । स्वयं सर्वमयो भूत्वा परंब्रह्म विलोकयेत् ।९७।

परात्परतरं नान्यत्सर्वमेव निरालयम् । यस्यावलोकनादेव सर्व सङ्गविवर्जितः ।९८।
एकाकि निःस्पृहः शान्तः स्थातव्यंतत्प्रसादतः । लब्धं यद्वाप्यलब्धं वा स्वल्पं वा बहुलं तथा ।९९।
निष्कामेनैव भोक्तव्यं सदा संन्तुष्टमानसः । सर्वज्ञपदमित्याहुर्देही सर्वमयो विदुः ।१००।
सदानन्दं सदाशान्ति रमते यत्र कुत्रचित् । यत्रैव तिष्ठते सोपि सर्वेशः पुण्यभाजनः ।१०१।
मुक्तस्य लक्षणं देवि तवाग्रे कथितं मया । उपदेशो मया देवि गुरुमार्गेण दर्शितः ।१०२।
गुरुभक्तिस्तथा ध्यानं सकलं तव कीर्तितम् । तेन तद्भावयेत्कार्यं यद्वातद्वा महातपे ।१०३।
लोकोपकारकं देवि लौकिकं तु न भावयेत् । लौकिकं कमतो यान्ति ज्ञानहीना भवार्णवे ।१०४।
ज्ञानतो भावयेत्सर्वं कर्म निष्कर्म सम्प्रति । तदत्र भक्तिभावेन पठ्यते श्रूयते यदि ।१०५।
लिखित्वा यत्प्रदातव्यं तत्सर्वं सफलं भवेत् । गुरुगीताभिध देवि शुद्धतत्वं मयोदितम् ।१०६।
भवव्याधि विनाशार्थं स्वयमेव सदा जपेत् । गुरुगीताक्षरैकैक मन्त्रराजमिदं प्रिये ।१०७।
अन्ये च विविधा मन्त्रा कलां नार्हन्ति षोडशीम । अनन्तफलमाप्नोति गुरुगीता जपेन तु ।१०८।
सर्वपापसंहृघ्नं सर्वदारिद्रयनाशनम् । अकालमृत्युहरणं सर्वसंकटनाशनम् ।१०९।
यक्षराक्षस भूतानां चोरव्याघ्रभयापहम् । महाव्याधिहरं चैव विभूतिसिद्धिदं भवेत् ।११०।
अथ वा मोहने वश्ये स्वयंमेव जपेन्नरः । कुशैर्वा दूर्वया देवि आसने शुभ्रकम्बले ।१११।
उपविश्य ततो देवि जपेदेकाग्रमानसः । शुक्लासने वै शान्त्यर्थं वश्ये रक्तासने प्रिये ।११२।
अभिचारे कृष्णवर्णं पीतवर्णं धनागमे । उत्तरे शान्ति जाप्ये स्याद्वश्ये पूर्वमुखो दिने ।११३।
दक्षिणे मारणं प्रोक्तं स्तम्भने पश्चिमे मुखः । मोहनं सर्वभूतानां बन्धमोक्षकरं परम ।११४
देवभूपप्रियकरं लोकानां वशमानयेत् । मुखस्तम्भकरं नृणां सद्गुणानां विवर्द्धनम् ११५।
दुष्कर्मनाशनं चैव सुकर्म सिद्धिदं भवेत् । असिद्धं सिध्येत्तत्कार्यं नवग्रहभयापहम् ।११६।
दुःस्वप्ननाशनं चैव सुखस्वप्न प्रदर्शनम् । सर्व शान्ति करं नित्यं वन्ध्या पुत्रफल प्रदम् ।११७।

अवधव्यकरं स्त्रीणां सौभाग्यदायकं परम् । आयुरारोग्यमैश्वर्यं पुत्रपौत्रविवर्द्धनम् ।११८।
निष्कामेन त्रिवारं वै जपेन मोक्षमाप्नुयात् । अवैधव्यं सकामेन लभतेऽत्रान्य जन्मनि ।११९।
सर्व दु:खभयं विघ्नं नाशयेत्त्वषह्रारकम् । सर्वव्याधिप्रशमनं धर्मार्थकाममोक्षदम् ।१२०।
यं यं चिंतयते कामं तं तं प्राप्नोति निश्चितम् । कामितस्य कामधेनु: कल्पितस्य कल्पद्रुम: ।१२१।
चितामणि: चिन्तितस्य सर्वमङ्गलकारकम् । मोक्षे हेतुर्जपे न्नित्यं मोक्षश्रेयो ह्यवाप्नुयात् ।१२२।
भोगकाम्ये जपे द्यो वै तस्य कामफलप्रदम् । जपेन शाक्तैश्च सौरेश्च गाणपत्यैश्च वैष्णवै: १२३।
शैवैश्च सिद्धिद देवि सत्यं सत्यं न संशय: । अर्थकाम्यजपस्थानं कथयामि वरानने ।१२४।
सागरे वा सरित्तीरे तीर्थे हरिहरालये । शक्तिदेवालये गोष्ठे सर्वदेवालये शुभे ।१२५।
बटस्य धात्रि ले वा मठे वृन्दावने तथा । पवित्रे निर्जने स्थाने नित्यानुष्ठानतोऽपि वा ।१२६।
निर्वेदनेन मौनेन जपमेतत्समाचरेत् । श्मशाने भयभूमौ च वटमूलान्तिके तथा ।१२७।
सिध्येन्निधौ वटे मूले चूतवृक्षस्य सन्निधौ । गुरु पुत्र वरो मूर्ख: तस्य सिद्धयन्ति नान्यथा ।१२८।
भुभकर्माणि सर्वाणि दोक्षा दीक्षादि सिद्धिदा । संसारमलनाशार्थं भवपाशनिवृत्तये ।१२९।
गुरुगीताम्भसा स्नानं तत्वज्ञ: कुरुते सदा । स एव सद्गुरु: साक्षात्सदसद्ब्रह्म वित्तम: ।१३०।
तस्य स्थानानि सर्वाणि पवित्राणि न संशय: । सदेश: शुद्धो यत्रासौ शुभ:स्याद्यत्र तिष्ठति ।१३१।
तत्र देवगणा: सर्वे क्षेत्रेऽपि ते च संहिते । अशनस्थो शयनस्थो वा गच्छतस्तिष्टतो ऽपिवा ।३२।
अश्वारूढो गजारूढ: सुषुप्तोजाग्रतोऽपि वा । शुचिष्मान् वै सदाज्ञानी गुरुगीता जपेन तु ।३३।
तस्य दर्शनमात्रेण पुनर्जन्म न विद्यते । समुद्रस्य यथा तोय क्षीरं क्षीरे जलाजले ।३४।
भिन्नकुम्भे यथाकाशं तथात्मा परमात्मनि । तथैव ज्ञानी जोवात्मा परं ब्रह्मणि लीयते ।३५।
एकेन रमते ज्ञानी यत्र तत्र दिवानिशम् एवं विधिमहा मुक्ता सर्वदा वर्त्तते स्वयम् ।३६।
तस्मै सर्व प्रयत्नेन भक्तिभावं करोति य: । गुरु संतोषिते सर्वे मुक्तास्ते नात्र संशय: ।३७।

भुक्ति मुक्ति दया तेषां जिह्वाग्रे च सरस्वती । अनेन प्राणिनां: सर्वे गुरुगीता जपान्विता: ।३८।
गुरुगीता समन्नास्ति सत्यं सत्यं वरानने । सर्वसिद्धिमवाप्नोति भुक्तिं मुक्तिं न संशय: ।३९।
सत्यं सत्यं पुन: सत्यं निजधर्मो मयोदित: । गुरुदेवो गुरुधर्मो गुरुनिष्ठा परं तप: ।४०।
गुरुपरतरं नास्ति नास्ति तत्वं गुरूपरि । धन्या माता पिता धन्यो धन्यो वंश: कुलं तथा ।४१।
धन्या च वसुधादेवी गुरुभक्ति: सुदुर्लभा । शरीरमिन्द्रियप्राणा अर्थस्वजनबान्धवा: ।४२।
पिता माता कुलं देवि गुरुरेव न संशय: । आकल्प जन्मनि कोटयां जप व्रत तप क्रिया: ।४३।
तत्सर्वं सफलं देवि गुरु संतोष मात्रत: । विद्याधनमदेनैव मन्दभाग्याश्च ये नरा: ।४४।
गुरुसेवां न कुर्वन्ति सत्यं सत्यं वदाम्यहम् । ब्रह्मा विष्णु महेशादि देवर्षि पितृ किन्नरा: ।४५।
सिद्धचारणयक्षाश्च मुनयो ऋषयो जना: । गुरुसेवापरं तीर्थं अन्यतीर्थं निरर्थकम् ।४६।
सर्वतीर्थाश्रियं देवि सद्गुरुश्चरणाम्बुजे । इदं रहस्यं न वाच्यं तवाग्रे कथितं मया ।४७।
सुगोप्यं च प्रयत्नेन येनात्मा त्वं प्रदास्यसि । स्वामो मुख्य गणेशादि देवतानां च पार्वति ४८।
मनसापि न वक्तव्यं मम सान्निध्यकारकम् । अतिविचित्र शान्तश्च श्रद्धाभक्तिसमन्वित: ।४९।
प्रवक्तव्यमिदं देवि ममात्मासि सदा प्रिये । अभक्ते वञ्चके धूर्ते पाखण्डे नास्तिके नरे ।५०।
मनसापि न वक्तव्यं गुरुगीता स्तवं प्रिये । गुरवो बहव: सन्ति शिष्यवित्तापहारक: ।५१।
दुर्लभ: स गुरुर्देवो शिष्यसंतापहारक: । गुरुज्ञानप्रसादेन शिष्यस्य तिमिरक्षय: ।५२।

संसारसागरसमुद्धरणैकमन्त्रं ब्रह्मादिदेवमुनिपूजितसिद्धमन्त्रम् ।
दारिद्र्य दु:खभवशोक विनाशमन्त्रं बन्दे महाभयहरं गुरुराजमन्त्रम् ।५३।

इति श्री स्कन्द पुराणे उत्तराखण्डे ईश्वर पार्वती संवादे गुरु गीतायां
गुरुस्तवराज स्तोत्रं सम्पूर्णम्

सुमेलपुर वास्तव्य पं० गङ्गारामशर्मणा लिखितम् वैक्रम सं० २००१ भाद्रपद प्र० १



जम्बूसाम्बपुरोः सुमेलपुर भूर्ग्रामो द्विजैमण्डितः
पूज्यैर्भूरिखजूर्दु होत्तर भवैर्गो वामि विष्णूत्तरैः
भूरि ज्ञातिभवेषु कर्मठगुरुर्विद्याधरः पण्डितः
भारद्वाजकुले शाग्रमतिमान् काशी च तस्यात्मजः१
पुत्राःपञ्चमितास्तु तस्यसकला स्तुर्यस्तु काका ततो
दुर्गाद्यो हृदयालुमध्यमसुतः सोह्नू कनिष्ठोऽभवत् ।
तस्माद्वै हृदयालुतः षडभवन् श्रीपर्शुरामोऽग्रज-
स्तस्मात्पुत्र चतुष्टयं सभवद् गङ्गाभिरामोऽनुजः ।२



## ※ अथ समस्तपरशुरामायणम् ※

### ※ विहारिलालवाशिष्ठप्रणीतम् ※

### ※ मंगलाचरणम् ※

रामो भार्गवनन्दनो विजयते रामं भजे पूरुषं
रामेणैव सहस्त्रबाहुहननं रामाय नित्यं नमः
रामात्पर्शुधरात्परो न हि प्रभूरामस्य सर्वं वशे
रामे स्याद्भृगुनन्दने मम मतिर्हे पर्शुराम प्रभो ।१।

भावार्थ —भृगुकुल भूषण भगवान् परशुराम जी सदा विजयी हैं । मत्स्य, कूर्म, वराह, नृसिंह, वामन दिव्य पांच अवतारों के वाद षष्ठ पुरुष रूप में अवतार लेने वाले राम का सदा भजन करता रहूं । भार्गव श्री परशुराम जी ने ही सर्वदा अजेय सहस्त्रबाहु का उद्धार किया । श्री परशुराम भगवान् को नित्य नमस्कार है। परशुधारीराम के परे कोई सर्वसमर्थ नहीं । परशुराम जी के सभी वश में है। भगवान् भृगुनन्दनराम में मेरी बुद्धि की लगन बनी रहे। हे परशुराम भगवान् मेरी यही प्रार्थना है ।

श्रीपरशुराम भगवतोवंशपरिचयः—

आदौ ब्रह्ममनः प्रसूर्भृगुरसौ साक्षात्कृशानूज्वलः
ख्यात्याख्यप्रिय भार्यया प्रतिवसन् धाताविधाताभिधौ ।
द्वौ पुत्रौ तपसाञ्चयाविव सुरौ लेभे तृतीयं कविं
तस्माच्छुक्र इति प्रसिद्ध कविराट् शुक्राद्दचीको मुनिः ।२।

भावार्थः—सर्व प्रथम सृष्टिकर्ता ब्रह्मदेव की मानसिक सृष्टि में अग्नि के समान साक्षात् महर्षि भृगुजी का प्रादुर्भाव हुआ। उनके कर्दमपुत्री ख्यातिनामक धर्मपत्नी से धाता, विधाता यमलपुत्रों के पश्चात् तृतीय कवि नामक पुत्र हुए। उनका जगत्प्रसिद्ध शुक्रनामक पुत्र हुआ। उनके ऋचीक नामक महामुनि पुत्र के रूप में उत्पन्न हुए ।२।

ऋचीकविवाहे गाधिराजस्य शुल्कपूर्तिः—

**गाधिं सत्यवतीमयाचतमुनिः कन्यामृचीकाभिध—**
**स्तं मत्वाऽसदृशं वरं समवदच्छुल्कं पुरो दीयतां।**
**अश्वानां शशिवर्चसां दशशतं श्यामैक कर्णात्मनां**
**श्रुत्वर्षिर्वरुणान्तिकं गत इतश्चानीय दत्वा हयान् ।३।**

भावार्थः—महर्षि ऋचीक ने गाधिराज से उनकी पुत्री सत्यवती मांगी। गाधि ने समझा कि ऋचीक कन्या सत्यवती के योग्य वर नहीं अत ऋचीक से कहाकि हम कुशिक वंशीय राजकुल से हैं अतः कन्या मिलने में कठिनाई होगी। इसलिये श्वेतवर्ण के, एक कान जिनका श्यामवर्ण का हो ऐसे एक हजार अश्वमेधोपयोगी दिव्य अश्व शुल्क के रूप में हमें लादें तो गाधि के आशय को समझकर वरुण के पास जाकर गाधि के कथनानुसार वैसे ही अश्व राजा को लाकर दे दिये ।३।

अद्भुतहविर्गाथावर्णनम् —

शुक्राचार्यजनिर्ऋचीक ऋषिराड् गाधेः सुतां कामली—
मुद्वाह्याथ हविर्ददौ पृथगसौ श्वश्र्वै स्वपत्न्यै क्रमात् ।
क्षात्रंब्राह्ममहोऽद्भुतं बलयुगं श्वश्रूर्व्यधादन्यथा
स्वं गर्भं महदुग्रतेजसमयं ज्ञात्वा ऋचीकोऽभ्यधात् ।४।

भावार्थः—शुक्राचार्य के पुत्र महर्षि ऋचीक ने गाधिराज की कन्या कामली (सत्यवती) को विवाह कर गाधिपत्नी की प्रार्थना से पुत्र प्राप्ति हेतु अपनी सास और धर्मपत्नी दोनों के लिये अभिमन्त्रित अद्भुत हवि जो क्षात्र और ब्राह्म तेज से पूर्ण थे वे अलग २ दोनों अपनी सास को दिये उसने छल द्वारा ब्राह्म तेज वाला स्वयं खालिया और क्षात्रतेज वाला अपनी पुत्री सत्यवती को खिला दिया। अपनी पत्नी के अत्युग्र तेजोयुक्त गर्भ को जानकर महर्षि ऋचीक ने प्रिय धर्मपत्नी सत्यवती से कहा ।४।

ऋचीकोक्त्युत्तरं सत्यवत्याः पत्युरभ्यर्थनम्:—

त्वन्मातुश्छलहेतुना तव सुतो ह्यस्त्युग्रवीर्योजयी
साक्षाद्ब्रह्ममयो महर्षिगणधूः रव्यातश्च ते सोदरः।
श्रुत्वा सत्यवती पपात पदयोः पत्युर्भृशं दुःखिता
शक्तस्त्वं भगवंस्तदन्यथयितुं चेत्थं सुतो नेप्सितः ।५।

भावार्थः—प्रिये ! तेरी माता के छल से तेरा पुत्र अत्युग्र वीर्य सर्वत्र विजयी होगा एवं साक्षाद्ब्रह्मस्वरूप महर्षि गणाग्र-

गण्य विश्वप्रसिद्ध तेरा सगा भाई होगा। इतना सुन अत्यन्त दुःखातुर हो पति के चरणों में पड़कर प्रार्थना करने लगी कि हे भगवन् आप सर्वसमर्थ हैं इस भावी को पलट सकते हैं। आपके द्वारा कथित लक्षणों वाला पुत्र मुझ वाञ्छित नहीं ।५।

सत्यवती सान्त्वनम्:—

**दीनां तां किल सान्त्वयन् मुनिरसौ प्रोवाच शुक्रात्मज—**
**स्ते पुत्रो भविता महर्षिगणराड् विद्वांस्तपस्वी शुचिः ।**
**पौत्रस्ते भुवि चैकलोऽपि बलवांश्छास्तावतारः प्रभो**
**र्जातोऽसौ जमदग्निरग्निरपरः श्रीसत्यवत्याः सुतः ।६।**

भावार्थ—उस दीना सत्यवती को सान्त्वना देते हुए महर्षि ऋचीक ने कहा—अच्छी बात है। पुत्र के बदले तुमारा पौत्र वैसा (घोर प्रकृति) का समस्त भूमिपर अकेला ही बलवान् शासन समर्थ भगवान् विष्णु का आवेशावतार होगा। तदनन्तर समय पर अग्नि के समान जमदग्नि ने सत्यवती के गर्भ से जन्म ग्रहण किया। (सत्यवती समस्तलोक पावनी कौशिकी नाम की प्रसिद्ध नदी हुई)।

जमदग्नेरेणुकया विवाहः—

**कन्यां रेणु ऋषेरथो धृतिमतीं श्रीरेणुकां जगृहे**
**पत्नीं तां जमदग्निरग्निसदृशाँल्लेभे तु पुत्रान् बहून् ।**
**सर्वेष्वेषु कनिष्ठ एव भगवांश्छ्री परशु रामो महा—**
**स्तस्यैवाऽऽशुयशः कुमण्डलमिद पूर्णोज्ज्वलं सव्यधात् ।७**

भावार्थ—इक्ष्वाकुवंशीय राजर्षि रेणु की पुत्री रेणुका के साथ जमदग्नि ने पाणिग्रहण किया। रेणुका के गर्भ से जमदग्नि ऋषि के वसुमानादि कई पुत्र हुए। उनमें सबसे छोटे परशुराम जी थे, उनका यश सारे संसार में प्रसिद्ध है।

परशुरामगुणवर्णनम्—

**मन्ये हैहयवंशजान्तकृदयं जातस्तु भगवान्स्वयं**
**शक्तौ विष्णुमयो नये विधिमयो ह्योजःसु कैलाशराड्।**
**शिष्टे शिष्यमयः शठे यममयोऽप्याज्ञास्वचिन्त्यः स्वराट्**
**युद्धेष्वन्तकसन्निभोऽथ सुजनेष्वन्तः सुखाम्भोनिधिः।८।**

भावार्थ—परशु भगवान् मानो हैहय राजवंश में उत्पन्न होने वालों के लिए अन्त करने वाले स्वयं भगवान् ही आगए हों। जो शक्ति में साक्षात् विष्णु, वेदादि शास्त्रों में साक्षात् ब्रह्मा, तेजः पुञ्जों में साक्षात् कैलाशेश्वर भगवान् शिव के समान, शिष्ट जनों में शिष्य के समान, शठ लोगों में यम के समान, आज्ञा पालन में अनिर्वचनीय सर्वतन्त्र स्वतन्त्र, युद्धों में साक्षात् काल के समान, उत्तम स्वभाव वालों में हार्दिक सुख समूह के सागर हुए।८।

कार्तवीर्यार्जुननृपवर्णनम्:—

**आसीद्धैहयवंशजोऽर्जुननृपः कृतवीर्यराज्ञः सुतः**
**योऽसावत्रिसुतस्य पूजनरतो दत्तप्रसादाद्वरः।**
**प्राप्तस्तेन सहस्रबाहव इतः सर्वत्र जैत्रो भवे—**
**लब्ध्वाबाधबलं वचोऽतुलबलं सम्पच्च तेजस्विता।९।**

**वीरत्वं सुयशो बलं गुरुवराद्दत्तप्रसादान्नृपः**
**दृप्तस्तेन वरेण सिद्धिवशतः सर्वत्र गन्तुं क्षमः ।**
**क्षोब्धुञ्चाम्बुधिमुद्यतोऽत्यतिबली रोद्धुञ्च वायोजवं**
**जेतुं कालमपि क्षमोऽस्मि विधिना कोऽन्यः कृतो मादृशः ।१०**

**—युग्मकम्**

**भावार्थः**—हैहय वंश में उत्पन्न कृतवीर्य महाराज का पुत्र अर्जुन नामका राजा था जो अत्रिपुत्र भगवान् दत्तात्रेय की निरन्तर पूजा करता हुआ उनके प्रसन्न होने पर वरप्राप्त किया कि तुम्हारी हज़ार भुजाएं हो जाएं और संसार में सर्वत्र विजयी हो जाओ, इस प्रकार अबध बल को प्राप्त कर बाणी में अतुल बल सम्पत्ति तेजस्विता, वीरता, सुन्दर यशोबल, दत्तभगवान् ने गुरु स्वरूप होकर जो वर दिए उनसे सिद्धि प्राप्त करके उसे अत्यन्त घमण्ड हो गया कि मैं सर्वत्र जाने में समर्थ हूं समुद्र को भी क्षुब्ध कर सकता हूं, अत्यन्त उद्दण्ड अति बली होकर वायु के वेग को भी रोक सकता हूं और काल को भी जीतने में समर्थ हूं । मेरे जैसा इतना बलवान् ब्रह्मा ने और किसको रचा है ? ।९-१०।

**रावणस्य माहिष्मत्यां कारावासवर्णनम्:—**

**कौतस्कुत्यादशास्योऽर्जुनवनितवने ह्यग्सुक्रीडन्तमेनं**
**स्वालोच्योच्चावचोक्त्या दशभिरपि मुखैरर्जुनं दुर्जगाद ।**
**निष्क्रान्तः कार्तिवीर्यः स्वबलचलजलान्न्युप्तवान् गुप्तगुप्तौ**
**ज्ञात्वा पौत्रं पुलस्त्योऽर्जुन नृपवशगं मुक्तवानुक्तियुक्त्या ।११**

**भावार्थ**:—एक वार सहस्रबाहु अर्जुन प्रमदावन में बहुत सी सुन्दर स्त्रियों के साथ नर्मदानदी में जलक्रीडा मग्न था सहस्रबाहु ने अपनी बाहों से नदी का प्रवाह रोक दिया अकस्मात् कहीं से घूमता घामता रावण उधर आकर नर्मदा के तट पर विश्राम हेतु शिविर डाल कर बैठे तो नर्मदा की धारा उलटी बहने से रावण का शिविर डूबने लगा रावण अपने आपको वीर तो मानता ही था अतः सहस्रबाहु का यह पराक्रम सहन नहीं हुआ तो रावण सहस्रबाहु के पास आकर बुराभला कहने लगा। तब उसने सुन्दर अबलाओं द्वारा किये गये चञ्चल जल से बाहर निकलकर खेल-खेल में ही पकड़ कर माहिष्मती के गुप्त कारावास में बन्दर की तरह कैद कर लिया तत्पश्चात् पुलस्त्य जी के कहने से सहस्रबाहु ने रावण को मुक्त कर दिया ।११।

**मृगया व्याजेन कार्तवीर्यार्जुनस्य जमदग्नेराश्रमे समागमः**—

**कदाचित् कान्तारेऽर्जुननृपवरोऽगान्मृगयितुं**
**स दैवाद् भ्रान्त्याप्तः प्रवरजमदग्नेरुपसदम् ।**
**तपः पुञ्जस्याऽऽसीद् ऋषिवसति रत्नं ह्यसुरभिः-**
**हविष्मत्या राज्ञे सबल सचिवायार्हणविधिम् ।१२।**

**भावार्थ**:—एक दिन सहस्रबाहु अर्जुन आखेट क्रीडा के लिये घने वन में निकल गया। दैववश वह जमदग्नि के आश्रम में जा पहुंचा। परम तपस्वी जमदग्नि मुनि के आश्रम में कामधेनु विद्यमान थी। उसके प्रताप से उन्होंने सेना मन्त्री

एवं वाहनों सहित हैहय नरेश का पूर्णतः स्वागत सत्कार किया ।१२।

सहस्रबाहोः कामधेनोरपहरणं परशुरामस्य पश्चादनु धावनम्:—

हविर्धान्यां लुब्धो नृपइव खलो नाऽऽद्रियत तं
सवत्सां क्रन्दन्तीमहरदिह बलात्तां निजपुरीम् ।
तदाऽऽयातः पश्चात्परशुधर रामो निजगृहान्
विदित्वा तद्दौष्ट्यं दुरहिरिव सुतीक्ष्णं स चुकुपे ।१३।

भावार्थः—हैहय नरेश ने कामधेनु पर ललचाने से लोलुपता वश स्वागत सत्कार को कुछ भी महत्व न देकर खल की तरह कामधेनु को बलात् बछड़े सहित बांध कर चिल्लाती हुई कामधेनु को माहिष्मती पुरी में ले गया। तत्पश्चात् परशुराम जी आश्रम में पहुंचे तो उसकी दुष्टता का समाचार सुन कर प्रहार से पीडित हुए सर्प की तरह क्रोध से तिलमिला उठे ।१३।

परशुरामस्य माहिष्मतीं प्रतिगमनम् —

आदायोग्रं स पर्शुं रिपुबलदलनं कार्मुकं चर्मतूर्णं
सद्योऽसावन्वधावन्मृगपतिरिव यूथाधिपं मत्तनागम् ।
दुर्दैवादापतन्तं भृगुकुलजमहो ह्योजसा सं विशन्तं
चैणेयत्वग्जमर्कत्विडहित जटिलश्चैक्षि तां राजधानीम् ।१४।

भावार्थ:—तत्क्षण रामजी भयङ्कर कुठार, तूणीर ढाल धनुष लेकर अत्यन्त वेग से उसके पीछे दौड़ पड़े। जैसे महासिंह हाथी पर टूटपड़। सहस्रबाहु अर्जुन अभी अपने नगर में प्रवेश ही कर रहा था तो उसने देखा परशुरामजी बड़े वेग से उसी की ओर झपटे आरहे हैं। उनकी विलक्षण ही झांकी थी। वे हाथ में धनुष, बाण, परशु लिये शरीर पर काला मृगचर्म धारण किये हुए थे एवं उनकी जटाएं सूर्य किरणों के समान चमक रही थीं। उन को राजधानी में आते देखा।१४

अर्जुनद्वारा प्रेषिताष्टादशाक्षौहिणी सेनाया विनाशः—

भीमा हस्तिरथाश्वपत्तिभिरमीरष्टादशाक्षौहिणी-
रायान्तीरसिऋष्टिसृष्टिशरधीष्वासैः शतघ्नीवृताः।
ता एको भगवानसूदयदहो रामोमृधे लीलया
सद्यो याति यतो मनोऽनिलजवात्प्रास्यन्महद्दीधितिः।१५।

भावार्थ:—परशुराम जी को देखते ही सहस्रबाहु ने गदा, खड्ग, बाण ऋष्टि शतघ्नी आदि आयुधों से सज्जित हाथी, घोड़े रथ एवं पैदलों से युक्त अत्यन्त भयङ्कर अष्टादश अक्षौहिणी सेना भेज दी। भगवान् परशुराम जी ने लीलामात्र से अकेले ही उस समग्र सेना को नष्ट भ्रष्ट कर दिया। भगवान् परशुराम जी की गति मन और वायु के समान थी। बस वे सेना को काटते ही जा रहे थे। जहां जहां वे कुठार प्रहार करते थे।१५।

परशुरामस्य युद्धे पराक्रम वर्णनम्:—

**देवाच्चैव ततोऽवछिन्नभुजपञ्जानूरुमुण्डादय-**
**श्चाभीक्ष्णं निपतन्ति वै भुविरथाः सूताः सवाहा हता ।**
**दृष्टवा रामकुठारसायकशरैः सैन्यं समग्रं हतं**
**कोपाद्धैहयवंशजः स्वयमसौ रामाभिमुख्यं ययौ ।१६।**

भावार्थ:—वहां-वहां सारथि एवं वाहनों के साथ बड़े-बड़े वीरों की भुजाएं, जांघें और कन्धे कट-कट कर पृथ्वीपर गिरते जाते थे। हैहयराज अर्जुन ने देखा कि मेरी सेना के सैनिक उनके धनुष ध्वजाएं और ढाल भगवान् परशुराम के कुठार और बाणों से कट-कट कर खून से लथपथ रणभूमि में गिर रहे हैं तब उसे बडा क्रोध आया और वह स्वयं भिडने के लिये आ धमका और परशुराम के सामने युद्ध के लिये डट गया ।१६।

परशुराम कार्तिवीर्यार्जुनयोर्युद्ध वर्णनम:—

**क्रुद्धः पञ्चशतेषु बाहुभिरिषूंश्चापेष्वसौ सन्दधे**
**रामोऽसौ युगपत् समच्छिनदरेस्तान्येकधन्वेषुभिः ।**
**भूयोऽसावचलान्करैश्च विटूपानुत्क्षिप्य वेगान्मृधे**
**रामः स प्रसभं त्वहेरिव भुजांश्चिच्छेद पर्शोर्बलात् ।१७।**

भावार्थ:—सहस्रबाहु ने क्रुद्ध होकर एक साथ ही अपनी हजार भुजाओं से पांचसौ धनुशों पर बाण चढाए और परशुराम जी पर छोड़े। परन्तु परशुराम जी तो समस्त धनुषधारियों

के शिरोमणि ठहरे। उन्होंने अपने एक धनुष पर छोड़े हुए बाणों से ही एक साथ सब को काट डाला अब हैहय नरेश अपने हाथों से पहाड़ और पेड़ उखाड़ कर बड़े वेग से युद्धभूमि में परशुराम जी की ओर झपटा। परन्तु परशुराम जी ने अपनी तीक्ष्णधार वाले कुठार (कुल्हाड़े) से अत्यन्त स्फूर्ति के साथ उसकी सांपों के समान भुजाओं को काट डाला ।१७।

सहस्रार्जुनवधोत्तरं स्वपित्रे कामधेनु समर्पणम्:—

**राज्ञः छिन्नकरस्य वाऽऽहरदथो मुण्डं गिरेः शृङ्गवद्**
**भिन्नीभूतकबन्धतोऽयुतमिता भीताः सुता दुद्रुवुः ।**
**सूपावर्त्य हविष्मतीं स भगवान् विलष्टां स्व पित्रेऽर्पयत्**
**सर्वज्ञो जमदग्निराह परशुं पापं ह्यकार्षीर्वृथा ।१८।**

भावार्थः—राजा की भुजाएं कट जाने पर तब उन्होंने पर्वत के शिखर की तरह उच्चशीर्ष भी धड़ से अलग कर दिया। राजा सहस्रबाहु के मरजाने पर उसके दस हजार लड़के भी डरकर भाग गये। फिर परशुराम जी ने दुःखार्ता सवत्सा कामधेनु भी पिता को सौंप दी।१८।

राज्ञो वधस्य प्रत्यवायशमनाय जमदग्नेरुपदेशः:—

**सर्वं देवमयं यतस्त्वमवधीर्विप्राः क्षमायाः पदं**
**लोकेशत्वमवाप निर्धिहि क्षमया विष्णुः शिवोऽपीश्वरः ।**
**लक्ष्मीर्ब्रह्मभवप्रभापि क्षमया सौरीव संरोचते**
**ज्ञेयो ब्रह्मवधाद् गुरुर्नृपवधो मूर्धाभिषिक्तस्य वै ।१९।**

महर्षियों से पूर्णतः विद्याभ्यास कर आप्त पुरुषों में श्रेष्ठ, विद्वत्समाज में मूर्धन्य मुनि श्रेष्ठ निगमागम के सर्वज्ञ इस भूतल पर लब्ध प्रतिष्ठ भगवान् हुए ।३१।

अर्बुदस्थमुनयोऽवदन मुनिवर च्यवनजन्म कथां पप्रच्छुः—

**सर्वे ते मुनयोऽवदन् मुनिवरं श्रीमद्वशिष्ठं पुरा**
**ब्रूहि त्वं च्यवनस्य जन्मसमये को राक्षसो ह्यभ्यगात् ।**
**इत्युक्तोऽर्बुदकूटगो मुनिवरः सर्वां कथामादित**
**आसीद्गर्भवती पुलोमविदिता भार्या भृगोः प्रेयसी ।३२।**

भावर्थः—अर्वुद पर्वत पर बिराजमान वशिष्ठ के चारों ओर विद्यमान मुनिगण महर्षि वशिष्ठजी से बोले—हे मुनिवर ! च्यवन के जन्म समय कौन सा राक्षस आया था ? ऐसा पूछने पर वशिष्ठ जी ने आदि से कथा आरम्भ करदी। एक बार भृगुजी की पुलोमा नाम की प्रियपत्नी गर्भवती थी ।३२।

भृगोराश्रमे पुलोमरक्षसः समागमः—

**निष्क्रान्तेऽथ भृगौ सदाश्रमपदं रक्षः पुलोमाभ्यगात्**
**वन्यैर्मूलफलादिभिश्च सहसा स्वामन्त्र्य तं सादरम् ।**
**दृष्ट्वा हृच्छयपीडितां स मुदितो भार्यां जिहीर्षुः शुभां**
**पूर्वं या हि वृता शुचिस्मितवरा नाम्ना पुलोम्ना हि सा।३३**

भावार्थः—एक बार भृगुजी के आश्रम से बाहिर चले जाने पर पुलोम राक्षस भृगुजी के स्वच्छ आश्रम में आपहुंचा। गर्भजन्य दोष द्वारा हृच्छय से पीडित भृगुपत्नी पुलोमा ने

सद्यः वन के कन्दमूल फलादियों से आदर सहित सत्कार किया। वह राक्षस हृत्पीडा से व्याकुल भृगुपत्नी को देखकर अत्यन्त प्रसन्न हो उसे अपहरण करने का इच्छुक हो गया क्योंकि पहले पहल पुलोमा इसी पुलोम राक्षस के साथ ही वृत थी ३३

दानव पुलोमाग्निदेवयो संवादः—

पश्चात्तां तु पिताथ भृगवे प्रादात्तदा शास्त्रवत्
तन्नित्यं हृदि किल्विषं हि सततं तद्रक्षसो वर्तते ।
चक्रे हर्तुमनस्तदाग्नि शरणे ऽपश्यज्ज्वलत्पावकं
रक्षस्तं सम्पृच्छदाशु कथयेयं कस्य भार्या शुचे ? ।३४।

भावार्थः—किन्तु दैववशात् पुलोमा के पिता ने तत्पश्चात् शास्त्रोक्तविधि से पुलोमा नाम की कन्या भृगुमहर्षि को दे दी। वही पाप (किल्विष) नित्य निरन्तर इस पुलोम नामक दैत्य के हृदय में खटकता रहता है। तब उसे अपहरण करने की इच्छा से अग्नि भवन में प्रज्वलित अग्निदेव से पूछा ! हे अग्निदेव बताइये) पुलोमा किसकी पत्नी है ? ।३४

दानवाग्नि संवादः—

मद्भार्यापहृता पुरात्र भृगुणा सेयं वदस्वाशु मे
त्वत्तः सत्यवचः प्रमाणमितरन्नाग्ने ऽपहाराद्दले ।
सेयं याहि वृता त्वया न विधिना मन्त्रैर्गता सा भृगुं
पित्रा सा भृगवेऽर्पितात्र विधिना मत्साक्ष्यम तन्वता ।३५।

भावार्थ:—पुलोम राक्षस बोला—अग्ने ! जो पहले यहां भृगु ने मेरी भार्या का अपहरण किया था। शीघ्र सच-सच बताइये कि यही मेरी भार्या है क्या ? तेरे अतिरिक्त दूसरा कोई सत्यवचन प्रमाण नहीं है भी तो अपहरण के अतिरिक्त कुछ नहीं। अग्निदेव ने कहा कि—हे पुलोम ! यह वही पुलोमा है जिसे तुमारे साथ बिना विधि के वृत किया गया था वही यह मन्त्रों के द्वारा भृगु को प्राप्त हुई थी। इस के पिता ने यहीं वैदिक विधान से मुझे साक्षी रखकर भृगुमहर्षि को अर्पण कर दी थी।३५

पुलोमाया पुलोमरक्षसापहरणम् —

**श्रुत्वाग्नेर्वचनं जहार तरसा तां गुर्विणीं राक्षसो**
**गर्भोऽसौ निवसंश्च मातुरुदराद्रोषाच्च्युतः शक्तिमान् ।**
**तं दृष्ट्वा रविवर्चसं स सबलो रक्षोऽभवद्भस्मसात्**
**साऽऽदाय च्यवनं ससार महताढुःखेन सम्मूर्छिता ।३६।**

भावार्थ—अग्नि के वचन सुनते ही बड़े वेग से राक्षस ने अष्टमासिक गर्भ को धारण करने वाली पुलोमा का अपहरण कर लिया। माता के उदर में निवास करने वाला अत्यन्त शक्तिमान् गर्भ क्रोध से च्युत हो गया। उस सूर्य के समान तेजस्वी को देखते ही वह प्रबल पुलोम राक्षस भस्म हो गया। च्युत हो जाने से उस च्यवन नामक सद्योजात शिशु को लेकर चल पड़ी महान् दु:खके द्वारा मूर्छित हो गयी।३६

ब्रह्मणा पुलोमा सान्त्वनम्:—

**ब्रह्मा साश्रुमतीं ददर्शरुदतीं भार्यांभृगोः स्वां वधूं**
**शान्त्या सान्त्वयता "वधूसर" सरिन्नामाङ्किता ब्रह्मणा।**
**अद्यापि च्यवनाश्रमेऽश्रुसलिला तीर्थेषु जङ्गण्यते**
**सैषौऽभूच्च्यवनो भृगोः सुतवरो जातः प्रतापान्वितः।३७**

भावार्थः—ब्रह्मा ने रोदन में आंसुओं की नदी बहाती हुई भृगु की पत्नी अपनी पुत्र वधू को देख लिया शान्ति से सान्त्वना देते हुए उस आंसुओं की बहने वाली नदी का ब्रह्मा ने "वधूसर" नदी नामकरण कर दिया वह अश्रु सलिला "वधूसर" नदी आज भी च्यवनाश्रम की ओर वहती दिखाई देती है। जो तीर्थों में उत्तम गिनी जाती है वही च्यवन भृगुजी का श्रेष्ठ पुत्र अत्यन्त तपः प्रताप सम्पन्न महर्षिओं में गिना जाता है।३७।

भृगो सच्यवनपुलोम पत्नी दर्शनम्:—

**आलोक्य च्यवनं पुलोम गृहिणीं पप्रच्छ कोपाद्भृगुः**
**तस्मै केन च रक्षसेऽत्र ? कथिता कस्ते जिहीर्षुर्भुवि।**
**प्रोक्ताहं किल वह्निना नरभुजे नीतास्म्यहं रक्षसा**
**मुक्ता ते सुत तेजसा बलवता भस्मीकृताद्राक्षसात्।३८।**

भावार्थः—तत्पश्चात् भृगुजी ने आकर च्यवन को देखा और क्रोधित होकर अपनी भार्या पुलोमा से पूछा—उस राक्षस को किसने बताया ? तुमारा अपहरण कर्ता कौन है ? पुलोमा ने कहा

कि—अग्नि ने मेरे विषय में निवेदन किया था उसके बाद वह राक्षस मुझे लेगया। भवदीय पुत्र के प्रबल तेजसे भस्म हुए राक्षस से मुक्त हूं ।३८

भृगुकर्तृकमग्नये शापदानम्:—

**क्रुद्धोऽसावशपच्छुचिं भृगुमुनिस्त्वं सर्वभक्षो भव**
**तच्छापक्षणमेव साक्षमगमद् ब्रह्मा भृगुं प्रोक्तवान्।**
**भूम्यम्ब्वग्निसमीरखैर्जगदिदं देवैर्धृतं पञ्चभि-**
**श्चाग्निर्देवपुरोहितो हुतवहो देवर्षिनॄणाँ गुरुः ।३९।**

भावार्थ:—पुलोमा की बात सुनकर भृगु ने अत्यन्त क्रुद्ध होकर अग्नि को शाप दे दिया; हे अग्ने! तू सर्वभक्ष हो जा ऐसा सुनते ही तत्क्षण ब्रह्माजी प्रत्यक्ष प्रकट होकर भृगु को कहने लगे हे भृगो! भूमि, जल, अग्नि वायु और आकाश इन पांचों देवताओं ने इस जगत् को धारण कर रखा है। अग्नि को तो देव पुरोहित ही कहा है जो सभी देवताओं को हुतद्रव्य पहुंचाने का काम देता है वेदों में इसी लिए यह अग्नि ही देव ऋषि और मनुष्यों का गुरु कहा जाता है ३९।

ब्रह्मणाग्नेः प्रसादनम्:—

**माग्ने! सर्वशरीरतोऽत्र हुतभुक्! त्वं सर्वभक्षो भव**
**तेऽपानेर्र्चिष एव याश्च भगवंस्ताः सर्वभक्षा भुवि।**
**क्रव्यादा च तनुस्त्वदीय येह कथिता सा सर्वभक्षा शिखिन्**
**तेजोभिर्निजशापभावशमनं सत्यं भृगोस्त्वं कुरु ।४०।**

भावार्थः—हे अग्ने ! तू समस्त शरीर से अपने आप शुद्ध होकर देवताओं को शुद्ध यज्ञ सम्बन्धि चरु पहुंचाने वाला सर्वथा शुद्ध है अपने आपको भृगु के शाप से सर्वभक्ष मत समझो। तेरी अपान में जितनी किरणें दीप्त होकर अपान की शुद्धि में संलग्न हैं वही सर्व भक्ष हैं शेष नहीं। तेरी कव्यादमूर्ति जो कही जाती है हे शिखिन् ! वही सर्वभक्ष है। अपने शुद्ध तेज से महर्षि भृगु के इस शाप को शमन भी और सत्य भी करके जगत् को दिखा दो ।४०।

महाभारत आदि पर्वान्तर्गतपौलोम पर्व में ४, ५, ६, ७, अध्याय हुए उसी च्यवन महर्षि के सुकन्या से प्रमति नामक पुत्र हुआ उसका घृताची (प्रतापी) नामक अप्सरा से रुरु नामक पुत्र हुआ। उस रुरु महात्मा के प्रमद्वरा नामक पत्नी से शुनक नामक यशस्वी व तपस्वी पुत्र हुआ। उसी शुनक के शौनक हुए जो ८८००० महर्षियों में प्रमुख माने जाते हैं।

काान्यकुब्जनगर वर्णनम् —

**राजर्षेः कुशनाभतोऽप्सरभवास्ताच्याः शतं कन्यका**
**वायुस्तासु विमोहितः समवदत्कन्याभिरस्वीकृतः ।**
**वायोः कर्तृककुब्जिकास्तु मुदितः प्रादात्पिता चौलियं**
**यत्स्पर्शात्सकलाश्च कुब्जरहिता स्तत्कान्यकुब्जोऽभवत् ।४१**

भावार्थः—राजर्षि कुशनाभ की घृताची अप्सरा से १०० सौ कन्या हुई। उनके सौन्दर्य से मोहित वायुदेव ने उनके आगे विवाह का प्रस्ताव रखा। कन्याओं के द्वारा अस्वीकृत

होने पर वायु के शाप से सभी कन्याएं कुबडी हो गयी। कुशनाभ कन्याओं पर अतिप्रसन्न हुए। उन कन्याओं को काम्पिल्य नरेश चुलिय ऋषि के पुत्र ब्रह्मदत्त को विवाह दिया। जिसके स्पर्श मात्र से कुब्जत्व दूर होकर कन्याएं पुनः प्रकृतिभाव को प्राप्त हुई उस जानपद का नाम कान्यकुब्ज (कन्नौज) हो गया।४१।

कान्यकुब्जनरेशस्य गाधेर्वनगमनम्:—

**गाधीति प्रथितः सुरेन्द्र सदृशो यः कान्यकुब्जाधिपः**
**सन्तत्या रहितः सशोक विकलो जातो वनं स्त्रीयुतः।**
**जज्ञे तत्र वनेऽप्सरोनिभसुता श्रुत्वा ऋचीकोभ्यगाद्**
**अर्घ्याद्यैश्च पुरस्कृतो वनभवैः कन्दैः फलैर्भूभुजा ।४२।**

भावार्थ:—गाधिनाम से प्रसिद्ध कान्यकुब्ज नरेश सन्तान हीन होने से शोकाकुल होकर वनवास स्वीकार कर वन में रहते एक अप्सरा के तुल्य कन्या हुई। ऐसा सुनकर ऋचीक महामुनि वन में राजाके पास आगया राजा ने वनोत्पन्न कन्दमूल फल अर्घ्यादि से ऋषिवर का सत्कार किया।४२। महाभारते

ऋचीकविवाहे गाधिराजस्य शुल्कपूर्तिः:—

**गाधिं सत्यवतीमयाचतमुनिः कन्यामृचीकाभिध-**
**स्तं मत्वाऽसदृशं वरं समवदच्छुल्कं पुरो दीयताँ।**
**अश्वानां शशिवर्चसां दशशतं श्यामैक कर्णात्मनां**
**श्रुत्वर्षिर्वरुणान्तिकं गत इतश्चानीय दत्वा हयान् ।४३।**

भावार्थ:—महर्षि ऋचीक ने गाधिराज से उनकी पुत्री सत्यवती मांगी। गाधि ने समझा कि ऋचीक कन्या सत्यवती के योग्य वर नहीं अत: ऋचीक से कहाकि हम कुशिक वंशीय राजकुल से हैं अत: कन्या मिलने में कठिनाई होगी। इसलिए श्वेतवर्ण के, एक कान जिनका श्यामवर्ण का हो ऐसे एक हजार अश्वमेधोपयोगी दिब्य अश्व शुल्क के रूप में हमें लादें तो गाधि के आशय को समझकर वरुण के पास जाकर गाधि के कथनानुसार वैसे ही अश्व राजा को लाकर दे दिये ४३।

अश्वतीर्थवर्णनमृचीकविवाह प्रसङ्गश्च.—

**यत्रासंश्च समुत्थिता हयवरास्तत्राश्वतीर्थं जगौ**
**गाधिः सत्यवती ददौ सऽऋषये श्री कान्यकुब्जे पुरे।**
**आसन्वै वरयात्रिणः सुरवरागङ्गातटे पूजिता**
**धर्मेणाप्य स्वगेहिनीं गृहमगात्प्राप्तः प्रसन्नो भृगुः।४४।**

भावार्थ:—यहां अश्वमेधोपयोगी सहस्रों घोड़ वरुण लोक से आकर प्रकट हुए वही स्थान "अश्वतीर्थ" नामक शास्त्रों में गाया गया है। उस कान्य कुब्जेश्वर गाधिराजा ने महर्षि ऋचीक को कान्यकुब्जपुर में निज प्रिय कन्या सत्यवती दान कर दी। ऋचीक मुनि के वरयात्रा में देवता लोग भी आये थे। जिनकी गङ्गातट पर विधिवत् पूजा की गई। धर्मको साक्षी रखकर पत्नी प्राप्त करके अपनी धर्मपत्नी को घरमें लाये तो विवाह से प्रसन्न होकर महर्षि भृगुजी भी नववर वधू युगल को आशीर्वाद प्रदानार्थ पहुंच गये।४४।

भृगोर्वरदानायकनम्:—

अर्घ्याद्यैश्च समर्चितो भृगुवरः शान्तः प्रहृष्टोऽब्रवीत्
दाताहं सुभगे तवेप्सितवरं यत्तद् वृणीष्वाधुना ।
सा वै श्रीगुरुमात्मनः प्रियकरं प्रासादयामास तं
पुत्रार्थं पितुरात्मनश्च नियतं चक्रे प्रसादं च सः ।४५।

भावार्थः—अर्घ्यादि से पूजित, शान्त, प्रसन्नचित भृगुजी कहने लगे—हे सौभाग्य शालिनि ! जो तुमारा मनोरथ हो उसे वर रूप में मांगलो मैं दाता देने के लिये उपस्थित हूं । तब सत्यवती ने अपने लिए और अपने माता पिता के लिये पुत्र प्राप्ति का वर मांगा ४५।

भृगोः पुत्रार्थं चरु प्रदानम्:—

क्षात्रं वैष्णवतेजसावृतचरुः प्राश्यश्च मात्रा तवा-
श्वत्थालिङ्गनपूर्वकोविधिरयं प्रोक्तो न भूयाद्वृथा ।
ब्राह्मंरौद्रमयश्च साधितचरुः प्राश्यः स्नुषे स त्वया
श्लेषोदुम्बरभूरुहस्य नियतो यश्चान्यथा मा भवेत् ।४६।

भावार्थः—हे प्रिय पुत्रवधू ! यह क्षात्र वैष्णवतेजो युक्त चरु ऋतु-स्नानोत्तर पुंसवन काल में अश्वत्थ वृक्ष (पीपल) का आलिङ्गन करते तेरी माताजी प्राशन करें इस विधिका उल्लङ्घन मतकरें एवं यह ब्राह्मशैवतेजोयुक्त साधित चरु ऋतुस्नानोत्तर पुंसवन समय में उदुम्बर वृक्ष (गूलरतरु) का आलिङ्गन

करते हुए हे सत्यव्रति ! प्रिय स्नुषे ! तूने प्राशन करना। इस शास्त्रोक्तविधि विपर्यय मत करें।४६।

पौरुकुत्सीकर्तृक चरुप्राश वृक्षालिङ्गनयोर्विपर्यास:—

**गाधेःस्त्रीह यशस्विनी वर वशाद्भ्रान्तावदत्कौशिकीं**
**कुर्यास्त्वं चरुवृक्षयोर्विनिमयं प्राशये तथाऽऽलिङ्गने।**
**सामातुर्वचनं चकार सहसा मातुर्गिरो गौरवात्**
**दृष्ट्वागर्भयुतां किमेतत् स्नुषे ! मातुर्मतात्क्षाम्यताम् ४७**

भावार्थ:—गाधि महाराजा की धर्मपत्नी पौरुकुत्सी च्यवन के वर के प्रभाव से भ्रान्त होकर कौशिकी को कहने लगी कि चरुप्राशन में एवं तरु के आलिङ्गन में विनिमय कर दो सत्यवती ने पौरुकुत्सीम ता के वचनानुसार अपने वाला चरु माता पौरुकुत्सी को दे दिया और पौरुकुत्सी वाला चरु स्वयं खा गयी। पौरुकुत्सी को औदुम्बर का आलिङ्गन और स्वयं कोशिकी ने अश्वत्थ का आलिङ्गन स्वयं किया भृगुजी ने पूछा कि प्रियस्नुषे ! ऐसा विनिमय क्यों किया ? तो कौशिकी ने उत्तर दिया कि माता के गौरव की रक्षा के लिये महाराज मुझे क्षमा करें।४७।

दिव्यज्ञानाच्चरुंविनिमयंज्ञात्वा भृगोरागमनम् —

**दिव्यज्ञानवशाच्चरोर्विनिमय ज्ञात्वाऽऽगतोऽसौ भृगुः**
**प्रोचे सत्यवतीं स्नुषां स भगवान् मात्रासि त्वं वञ्चिता।**

**भद्रे क्षत्रिय वृत्तियुक्तव सुतश्चोग्रोऽपि सद्ब्राह्मणः**
**मातुस्ते वरक्षत्रियोऽपिच महान् यास्यत्यसौ ब्राह्मणः ।४८**

भावार्थ.—दिव्यज्ञान के प्रभाव से चरु एवं वृक्षके विनिमय को जानकर भगवान् भृगुजी आगये। अपनी स्नुषा सत्यवती को कहने लगे—हे भद्रे ! तूं अपनी माता के द्वारा वञ्चित हो गयी हो तेरा पुत्र सद्ब्राह्मण होता हुआ भी क्षत्रिय वृत्तिवान् महान् उग्रप्रकृति का पुत्र होगा। और तेरी माता पौरुकुत्सी के यहां उत्तम क्षत्रिय कुल होने पर भी पूर्णतः ब्राह्मणवृत्ति का पुत्र होगा ।४८। महाभारते

सत्यवत्या पौनः पुन्येन भृगोः प्रसारनम्:—

**पौनः पुन्यतया प्रसादितवती श्रीतातपादं भृगुं**
**साक्षाद्ब्रह्मभयोऽसि तात भगवन् पौत्रो भवेन्नात्मजः ।**
**सा तेन प्रतिनन्दिता भगवता प्रोक्तं "तथास्तु" स्नुषे !**
**जज्ञे सा जमदग्निमग्निसदृशं सद्वैष्णवाग्निं स्वदन् ।४९।**

भावार्थः—पुन पुनः श्रीतातपाद भृगुजी के चरणों में अनुनय विनय द्वारा प्रसन्न करती हुई प्रार्थना करती है कि आप साक्षाद् ब्रह्मरूप हैं आप सर्वशक्तिमान् हैं अतः ऐसा पुत्र न होकर चाहे पौत्र हो जाये किन्तु पुत्र न हो। उसके पश्चात् भगवान् भृगुजी ने प्रतिनन्दन स्वरूप हे वत्से ! स्नुषे ! "तथास्तु" कहकर आशीर्वाद दे दिया। उस आशीर्वाद के फलस्वरूप वैष्णाग्नि का पान करते २ अग्नि सदृश जमदग्नि नामक पुत्र उत्पन्न हुआ ।४९महाभारते

जमदग्नि वर्णनम्:—

**तेजस्वी स च वर्धमानशशिवत्सत्तेजसा वर्चसा**
**वेदस्याध्ययनैर्बहूनृषिवरान् शक्त्यातिशेते शिशुः**
**सद्यो भास्कर वर्चसं प्रतिफलन्नस्त्रं चतुर्धं च यत्**
**तं विद्या सकला कलाश्च स धनुर्वेदः स्वयं प्रत्यमात् ५०**

भावार्थ—वह तेजस्वो ऋचीक पुत्र जमदग्नि वर्धमान शुक्लपक्ष के चन्द्रमा की तरह तेज और ब्रह्मवर्चस के द्वारा बढने लगा। वेदाध्ययन के द्वारा सभी उत्तम ऋषिओं से भी शैशव में भी जमदग्नि अग्रगण्य थे। उस सूर्य की तरह प्रकाशवान् शीघ्र ही धनुर्वेद सहित समस्त विद्याएं अन्य कलाएं चारों प्रकार के अस्त्र स्वीय प्रतिभा से उद्भासित होने लगे।५०। —महाभारते

संक्षेपतो भृगुवंश वर्णनम्:—

**पौलोम्यां च्यवनो भृगोस्तु च्यवनाद्द्वौ वै दधीचाऽऽत्मवान्**
**नाहुष्यात्मवतोऋचीकऋषिराडौर्वो ऽग्निवडवाननः ।**
**कौशिक्यां च ऋचीकजाः सुतशतं जमदग्निवत्सौ कृतौ**
**रेण्वा वै जमदग्नितो वसुरुमन्वांश्चापि विश्वावसुः ।५१।**

भावार्थ:—भृगु की पौलोमी से च्यवन के सुकन्या से दो पुत्र हुए दधीचि और आत्मवान्। आत्मवान् की पत्नी मनुपुत्री नाहुषी (आरुषी या ऋची) से ऋचीक (और्व, वडवानन, अश्वमुख) ऋचीक की सत्यवती पत्नी से जमदग्नि, शुनः

शेफ, शुनःपुच्छ, वत्स के अतिरिक्त १०० सौ पुत्र हुए। जमदग्नि की रेणुका (कामली) से रुमण्वान, सुषेण, वसु, विश्वावसु; वृहद्भानु पांच पुत्रों के बाद परशुराम जी हुए।५१

जमदग्नेरिन्द्रप्रीत्यै सहस्राब्दान्तं तपस्तप्त्वा कामधेनु प्राप्तिः—

**धर्मात्मा जमदग्निरग्निमुपसन्धायेन्द्रमन्त्रं जपन्**
**तप्त्वा वर्षं सहस्रकं सुरनदी तीरे स्वयं स्वर्गराट् ।**
**प्रीतोऽसौ जमदग्निमाह मुनिराट् ! स्वेष्टं वरं ब्रूहि माँ**
**प्राहेत्थं जमदग्निरिन्द्र ! भगवन् ! देह्यग्निहोत्रीं मुदा ।५२**

भावार्थः—धर्मात्मा जमदग्नि जी ने अग्नि प्रज्वलित कर इन्द्र महाराज का जप करते हुए एक हजार वर्ष तक गङ्गा के तटपर तप करने से वह इन्द्र स्वयं प्रसन्न होकर बोला हे जमदग्नि ! मुनीश्वर ! अपनी इच्छानुसार वर मांगलो। जमदग्नि ने कहा—हे भगवन् ! यदि प्रसन्न हो तो कामधेनु गौ देने की कृपा करें।५२     पद्मपुराणे

इन्द्रस्य जमदग्नये कामधेनुदानम्:—

**प्रादात्कामदुघां हरिश्च सुरभिं सर्वार्थसिद्धिप्रदां**
**लब्ध्वा तां जमदग्निरिन्द्रसदृशः स्वैश्वर्ययुक्तो ऽभवत् ।**
**राज्ञो रेणुक कन्यया स विधिवत्कृत्वा विवाहं सुखी**
**रेमे रेणुकया सधर्मसहितो जाता ह्यनेके समाः ।५३।**

भावार्थः—स्वर्गेश्वर इन्द्र ने समस्त सिद्धिएं एवं मनोरथों को पूर्ण करने वाली सुरभि गौ जमदग्नि को दे दी। उस सुरभि

को प्राप्त कर जमदग्नि इन्द्र के समान निजी ऐश्वर्य से सम्पन्न हो गया। राजा रेणुक की कन्या रेणुका (पुराण भेद से प्रसेनजित् राजा की कन्या) के साथ वैदिकविधि से विवाह करके अत्यन्त सुख से अपनी पत्नी के साथ रहते कई वर्ष बीत गये ।५३।          —पद्मपुराणे

पुत्रेष्टियाग महोत्सव:—

**पुत्रं प्राप्तुमनाश्चकार विधिना पुत्रेष्टि यागं मुदा**
**सन्तुष्टोऽथ शचीपतिवरमदाद् वर्चस्विपुत्रोभव।**
**जातं पुत्रचतुष्टयं वसुरुमण्वत्सेन विश्वावसु**
**गाङ्गयामुनसङ्गमं गुरुकुले ब्रह्मा चतुर्धा भवत् ५४। ✱**

**भावार्थः**—पुत्र प्राप्ति की इच्छा से जमदग्नि ने पुत्रेष्टि याग किया उससे सन्तुष्ट होकर इन्द्र ने वर दिया कि— वचस्वी पुत्रवान् हो जाओ। तत्पश्चात् वसु, रुमण्वान्, सुषेण एवं विश्वावसु नामक चार पुत्र हुए। मानो जमदग्नि गुरुकुल में गङ्गायमुना के सङ्गम पर ब्रह्मा एक से चार हो गये हों ।५४।          —पद्मपुराणे

---

✱ कहीं कहीं ७ पुत्रों का लेख आता है—

**रुमण्वाँश्च सुषेणश्च वसुर्विश्वावसुस्तथा**
**बृहद्भानु बृंहत्कण्वः कण्वश्च सप्तमोऽभवत् ॥**

जमदग्नि बाणलीला:—

सन्तुष्टो जमदग्नि सौरभ कृपासञ्जातकौतूहल:
कामल्यैषवलीलयाऽऽनयहृय प्रैषारतोऽनारत: ।
भग्नप्रक्रमसम्भवे मुनिरसौ पप्रच्छ किं ? किङ्करीं
मार्तण्डाण्डज चण्डताप विकलाजस्त्रं सजस्रा प्रभो ।५५।

भावार्थ:—कामधेनु की कृपासे अत्यन्त सन्तुष्ट होने पर उसके मन में कौतूहल उत्पन्न हुआ। बाणलीला रचदी बाण फैंकते थे और रेणुका कामली को कहते थे 'दौडो बाणलाओ,' "दौडो बाणलाओ," इसी चक्र में अभिजित् कालिक मध्याह्न के प्रचण्ड सूय के ताप से व्याकुल होकर वेचारी रेणुका सुस्ताने लगी तो जमदग्नि की बाणलीला में "बाणलाओ दौड़ो" जैसे क्रमके रङ्गमें भङ्ग होने से महर्षि ने वेचारी रेणुका से पूच्छा यह क्या ? उसने उत्तर दिया प्रभो ! अत्यन्त प्रचण्ड मार्तण्डताप से व्याकुल हो कुछ सुस्ता रही हूं ५५। —विष्णु धर्मोत्तरपुराण

ईषत्क्रुद्धे जमदग्नौ सूर्यं पश्यति सौरपुरुषस्य प्रादुर्भावे संवाद:—

श्रुत्वासौजमदग्निरग्निसदृशोऽपश्यद्रविं खेतपं
सद्यो भास्करमण्डलोद्भवनरो बद्धाञ्जलिस्तं मुनिम् ।
किं कार्यं ? ममगोचर नु भगवन् चण्ड: स्वभावो मम
'पुत्रो मेऽस्तु भवादृशो' इतिमुनिर'स्त्वित्थ'मूचे रवि: ५६

भावार्थ:—रेणुका की धूप से व्याकुलता सुनकर महर्षि जमदग्नि अग्नि के समान क्रुद्ध होकर आकाश के मध्य चमकते हुए सूर्य पर दृष्टिडालते ही सूर्यमण्डल से उत्पन्न सूर्यांश पुरुष दोनों हाथों से अञ्जलिबान्धकर मुनि के आगे उपस्थित होकर बोले—हे मुने ! भगवन् । मेरे गोचर कौनसी सेवा है जो मैं करूं ? मेरा प्रचण्ड होना स्वाभाविक है । आपका कौनसा कार्य है जो मैं सिद्ध करूं ? जमदग्नि बोले "मेरा आप जैसा पुत्र हो" यह वर मांगा "इत्थमस्तु" ऐसे वर स्वीकृति सूचक सूर्यांश पुरुष ने उत्तर दिया ।५६।

विष्णु धर्मोत्तरे

**सूर्यस्य रेणुकायै छत्रोपानहयोर्दानम्:—**

**पुत्रस्ते भवितास्म्यष्टममितादगर्भाद्धि पत्न्यां तव**
**छत्रोपानहमेतदेव सुतरां गृह्णातु पुत्रार्थिनी ।**
**छत्रोपानहयोर्हि दानमतुलं स्वर्गप्रदं सेत्स्यति**
**दत्तार्घ्यैश्च सुपूजितो रविरसौ दत्वावरं खं ययौ ।५७।**

भावार्थ—हे मुने ! इसी तेरी रेणुका पत्नी से अष्टमगर्भ से तेरे यहां पुत्र रूप में जन्म लूंगा । ये छत्र और पादुका पुत्रार्थिनी रेणुका को दे रहा हूं इनको श्रद्धा से ग्रहण करले । आज के पश्चात् यह छत्रोपानह का दान होगा शास्त्रों में अतुल माना जायेगा जो मनुष्यों को स्वर्ग सुखप्रद सिद्ध तत्पश्चात् दिये हुए अर्घ्यादि के द्वारा पूजित सूर्य नारायण जी अपने आकाश लोक में चले गये ।५७। —विष्णु धर्मोत्तरे

श्री परशुरामस्याविर्भावः—

लब्ध्वाऽपूर्ववरं रवेर्भगवतो गर्भं दधौ रेणुका
सन्तुष्टो जमदग्निरग्निमनिशं ध्यायन्द्विजाँस्तर्पयन् ।
वैशाखेधवलेदलेऽक्षय तृतीयायाँ तु सिंहोदये
पर्शूराम वरो सपर्शवध धरो साक्षादभूद् भास्करः ।५८।

भावार्थ—भगवान् सूर्यनारायण वर प्राप्त करके रेणुका ने गर्भ धारण किया तो अत्यन्त प्रसन्नचित्त महर्षि जमदग्नि जी अग्निहोत्री (कामधेनु) का ध्यान करते हुए ब्राह्मणों का तर्पण करते हुए वैशाख शुक्ल अक्षय तृतीया के दिन सिंहो लग्न में परशुराम भगवान् का स्वधिति (परशु) अस्त्र ❂ धारण किये हुए सूर्य के समान तेजस्वी बालक का जन्म हुआ। कहीं कहीं "गोधूलिलग्नोदये" लिखा है।५८।
परशुअस्त्र के समेत जन्म लेना —कालिका पुराणे ८३ ५

पर्शुरामगुणवर्णनम्:—

मन्ये हैहयवशजान्तकृदयं जातस्तु भगवांन्स्वयं
शक्तौ विष्णुमयो नये विधिमयो ह्योज सु कैलाशराड् ।
शिष्टे शिष्यमयः शठे यममयोऽप्याज्ञास्वचिन्त्यः स्वराट्
युद्धेष्वन्तकसन्निभोऽथ सुजनेष्वन्तः सुखाम्भोनिधिः ।५९।

---

❂ भारावतरणार्थाय जातः परशुना सह
सहजं परशुँ तस्य तं जहाति कदापि न ।।
कालिका पुराणे ८३।५

**भावार्थः**—श्री परशुराम जी मानो हैहय राजवंश में उत्पन्न होने वालों के लिए अन्त करने वाले स्वयं भगवान् ही आगए हों। जो शक्ति में साक्षात् विष्णु, वेदादि शास्त्रों में साक्षात् ब्रह्मा, तेजः पुञ्जों में साक्षात् कैलाशेश्वर भगवान् शिव के समान, शिष्ट जनों में शिष्य के समान, शठ लोगों में यम के समान, आज्ञा पालन में अनिर्वचनीय सर्वतन्त्र स्वतन्त्र, युद्धों में साक्षात् काल के समान, उत्तम स्वभाव वालों में हार्दिक सुख समूह के सागर हुए।५९।

**जलानयनार्थं गताया रेणुकायाः गन्धर्वराज दर्शनम्:—**

**तोयार्थं गृहतो गृहीतकलशा स्नातुं तु तोयाशयं**
**गङ्गायाँ किल रेणुका गतवती गन्धर्वराजं पुरा**
**क्रीडन्तं ददर्शेऽप्सरोगणयुतं सत्पद्ममालान्वितं**
**किञ्चिच्चित्ररथस्पृहा वशमगात्तद्धोमवेला गता।६०।**

भावार्थः—एक बार परशुराम जी की माता रेणुका गङ्गातट पर गई हुई थी। वहां उसने देखा कि गन्धर्वराज चित्ररथ कमलों की माला पहिने अप्सराओं के साथ विहार कर रहा था। उसका मन कुछ चित्ररथ की ओर खिच गया था। हवन का समय वीत गया ६।०

रेणुकाया गृहं प्रत्यागमनम्:-

**पत्युः शापविशङ्किता स्वसदने कालात्यये सं मुनिः**
**तस्थौ सा कलशं निधाय पुरतो बद्धाञ्जली रेणुका।**

**ज्ञात्वासौ व्यभिचारकं मुनिरसौ पत्न्याञ्च क्रुद्धोऽब्रवीद्**
**एतां वो घ्नत पुत्रका ! मम समे पापाँ दयां मा कृथाः ।६१**

भावार्थ—हवन का समय वीत गया, यह जानकर वे महर्षि के शाप से भयभीत हो तुरन्त वहां से आश्रम पर चली आई। वहां जल का कलश महर्षि के सामने रखकर हाथ जोडकर खड़ी हो गई। जमदग्नि मुनि ने अपनी पत्नी का मानसिक व्यभिचार जान लिया और क्रुद्ध होकर कहा 'मेरे पुत्रो ! इस पापिनी को मारडालो। इस पर दया मत करो परन्तु उनकी वह आज्ञा किसी ने नहीं मानी।६१।

पुत्रानामाज्ञाभङ्गोत्तरं पित्राज्ञप्तः परशुरामो मात्रा सहभ्रातॄनपि जघान:—

**इत्युक्ता न तु चक्रिरे मुनिसुताः पित्रा च सञ्चोदितो**
**रामोऽसाववधीन्निजान् हि सकलान् भ्रातॄंश्च मात्रा सह।**
**सम्यक्तत्तपसः प्रभावविदितः सिद्धेः समाधेश्च सः**
**प्रीतः सत्यवतीसुतः वरेण परशुँ सच्छन्दयामास तम् ।६२।**

भावार्थः—महर्षि जमदग्नि के किसी पुत्र ने उनकी वह आज्ञा स्वीकार नहीं की। तत्पश्चात् पिता की आज्ञा से परशुराम जी ने माता के साथ ही सब भाइयों को भी मार डाला। कारण यह था कि वे श्रीराम पिता के योग सिद्धि तपस्या के प्रभाव से भली भान्ति परिचित थे। परशुराम जी के इस कृत्य से सत्यवतीनन्दन जमदग्नि जी बहुत प्रसन्न

हुए और उन्होंने कहा कि—बेटा! तुमारी जो इच्छा हो; वर मांगलो ।६३।

परशुरामस्य वरे मृतानामुज्जीवनं वृत्तविस्मृतेश्च याचनम् —

**रामोऽप्यस्मृतिर्जीविते निजवरे वव्रे हृतानां वधं**
**उत्तस्थुस्त इवाञ्जसा कुशलिनोऽप्युन्निद्रिताः स्वे समे ।**
**श्रीरामः पितुरात्मनोऽद्भुततपो वीर्यं विदामग्रणी-**
**श्चक्रेऽतोऽत्र सुहृद्वधं स भगवान्त्सशोतिलेशोज्झितः ।६४**

भावार्थः—परशुराम जी ने कहा-"पिता जी! मेरी माता और सब भाई जीवित हो जाएं तथा उनको इस बात की याद न रहे कि मैंने उनको मारा था।" परशुराम जी के इस प्रकार कहते ही जैसे कोई सोकर उठे सबके सब अनायास ही सकुशल उठ बैठे। परशुराम जी ने अपने पिताजी का तपोबल जानकर ही तो सुहृदों का बध किया था ।६४।

श्रीपरशुरामवर्णनम्:—

**श्रीरामः स्वधितिप्रियः कृतधियामग्रेसरो भार्गवो**
**धर्मात्मा जमदग्निनन्दनवरः सत्यैकवीरात्मजः ।**
**साङ्गोपाङ्गमधीत्यवेदमखिलं विद्यैकलक्ष्यान्वितः**
**पूर्णब्रह्ममयः स्वयं प्रभुरसौ शस्त्रास्त्रपारङ्गतः ।६५।**

भावार्थ:—श्री परशुराम भगवान् स्वधिति(कुल्हाडी) के अतिप्रेमी पुण्यात्माओं के अग्रगण्य भृगुवंशभूषण धर्मात्मा, जमदग्नि पुत्रों में श्रेष्ठ रेणुक राजाकी पुत्री एकवीरा (कामली,

रेणुका) के पुत्रों में उत्तम साङ्गोपाङ्ग समग्रवेद को पढ़कर एकमात्र अनन्तविद्याओं की प्राप्ति का लक्ष्य रखने वाले पूर्णब्रह्मस्वरूप स्वयं प्रभु; समस्त शस्त्रास्त्रों के पारङ्गत हो गये ।६५।

**विशेष**:—महाभारत में जमदग्नि ने अपने पुत्रों को मातृवध की आज्ञा अहेलना पर क्रुद्ध होकर शाप दिया कि तुम सब मृग, पक्षियों की तरह जड हो जाओ एवं स्मृति भ्रष्ट होजाओ तदनन्तर परशुराम जी के वन से आने पर उसे भी आज्ञा दी कि हे पुत्र ! अपनी पापिनी माता को मारो दया और व्यथा मत करो। यह सुनते ही परशुराम जी ने पिता की आज्ञा पालन कर दिया तो जमदग्नि का क्रोध जाता रहा प्रसन्न होकर जमदग्नि ने कहाकि तूने मेरे कहने पर यह दुष्कृत्य कर दिया है। अपनी कामनाओं के अनुसार वर मांगों जो भी हृदय में चाहते हो वे मांगलो। पिता के कहने पर श्री पुरुषराम जी ने निम्नवर मांगे— १. माता जी उठें, २. माता जी को आद्योपान्त सब घटना भूलजाए और निष्पाप हो जाए, ३. भाईयों की जडता दूर होकर पुनः पूर्ववत् होजाएं; ४. युद्ध में कहीं भी कोई मेरा सामना नहीं कर सके। ५. मेरी आयु दीर्घ हो (अर्थात् युगयुगान्त) जीवी होने का वर दें यह सुन कर उसकी बुद्धिमत्ता पर प्रसन्न होकर उसके सभी वरों के लिये तथास्तु कहते ही माता सोई हुई की तरह जाग उठी। भाई पूर्ववत् जडता से रहित स्मृति में आ गये ॥

कार्तवीर्यार्जुननृपवर्णनम्:—

आसीद्धैहयवंशजोऽर्जुननृपः कृतवीर्यराज्ञः सुतः
योऽसावत्रिसुतस्य पूजनरतो दत्तप्रसादाद्वरः ।
प्राप्तस्तेन सहस्रबाहव इतः सर्वत्र जैत्रो भवे-
लब्ध्वाबाधबलं वचोऽतुलबलं सम्पच्च तेजस्विता ६६।

वीरत्वं सुयशो बलं गुरुवराद्दत्तप्रसादान्नृपः
दृप्तस्तेन वरेण सिद्धिवशतः सर्वत्र गन्तुँ क्षमः ।
क्षोब्धुञ्चाम्बुधिमुद्यतोऽप्यतिबली रोद्धुञ्च वायोजव
जेतुँ कालमपि क्षमोऽस्मि विधिना कोऽन्यः कृतो मादृशः ।६७

भावार्थ:—हैहय वंश में उत्पन्न कृतवीर्य महाराज का पुत्र अर्जुन नामका राजा था जो अत्रिपुत्र भगवान् दत्तत्रय की निरन्त पूजा करता हुआ उनके प्रसन्न होने पर वर प्राप्त किया कि तुम्हारी हजार भुजाएं हो जाएं और संसार में सर्वत्र विजयी हो जाओ, इस प्रकार अबाध बल को प्राप्त कर बाणी में अतुल बल सम्पत्ति तेजस्विता, वीरता, सुन्दर यशोबल दत्तभगवान् ने गुरु स्वरूप होकर जो वर दिए उनसे सिद्धि प्राप्त करके उसे अत्यन्त घमण्ड हो गया कि मैं सर्वत्र जाने में समर्थ हूं समुद्र को भी क्षुब्ध कर सकता हूं, अत्यन्त उद्दण्ड अति बली होकर बायु के वेग को भी रोक सकता हूं और काल को भी जीतने में समर्थ हूं। मेरे जैसा इतना बलवान् ब्रह्मा ने और किसको रचा है? ।६६-६७

रावणस्य माहिष्मत्यां कारावासवर्णनम्:—

कौतस्कुत्यादशास्योऽर्जुनवनितवने ह्यप्सुक्रीडन्तमेनं
स्वालोच्योच्चावचोक्त्या दशभिरपि मुखैरर्जुनं दुर्जगाद ।
निष्क्रान्तः कार्तवीर्यः स्वबलचलजलान्न्युप्तवान् गुप्तगुप्तौ
ज्ञात्वा पौत्रं पुलस्त्योऽर्जुन नृपवशगं मुक्तवान्युक्तियुक्त्या ।६८

**भावार्थ**:—एक बार सहस्रबाहु अर्जुन प्रमदावन में बहुत सी सुन्दर स्त्रियों के साथ नर्मदानदी में जलक्रीडा मग्न था सहस्रबाहु ने अपनी बाहों से नदी का प्रवाह रोक दिया अकस्मात् कहीं से घूमता घामता रावण उधर आकर नर्मदा के तट पर विश्राम हेतु शिबिर डालकर बैठे तो नर्मदा की धारा उल्टी बहने से रावण का शिबिर डूबने लगा रावण अपने आपको वीर तो मानता ही था अतः सहस्रबाहु का यह पराक्रम सहन नहीं हुआ तो रावण सहस्रबाहु के पास आकर बुराभला कहने लगा। तब उसने सुन्दर अबलाओं द्वारा किये गये चञ्चल जल से बाहर निकलकर खेल-खेल में ही पकड़ कर माहिष्मती के गुप्त कारावास में बन्दर की तरह कैद कर लिया तत्पश्चात् पुलस्त्य जी के कहने से सहस्रबाहु ने रावण को मुक्त कर दिया ।६८।

मृगया व्याजेन कार्तवीर्यार्जुनस्य जमदग्नेराश्रमे समागमः—

कदाचित् कान्तारेऽर्जुननृपवरोऽगान्मृगयितुं
स दैवाद् भ्रान्त्याप्तः प्रवरजमदग्नेरुपसदम् ।

**तपः पुञ्जस्याऽऽसीद् ऋषिवसति रत्न द्युसुरभिः-**
**हविष्मत्या राज्ञे सबल सचिवायार्हणविधिम् ।६९।**

भावार्थ:—एक दिन सहस्रबाहु अर्जुन आखेट क्रीडा के लिए घने वन में निकल गया। दैववश वह जमदग्नि के आश्रम में जा पहुंचा। परम तपस्वी जमदग्नि मुनि के आश्रम में कामधेनु विद्यमान थी उसके प्रताप से उन्होंने सेना मन्त्री एवं वाहनों सहित हैहय नरेश का पूर्णतः स्वागत सत्कार किया ।६९।

**राजोपकरण प्राप्त्यर्थं गोदोहनम्:—**

**दुग्धाकामदुघा तपस्विमुनिना हस्त्यश्वशालाद्भुता**
**चित्राण्यद्भुत तोरणान्युपवनैः सामन्तयोग्यानि च ।**
**प्रासादो बहुभूमिकोऽद्भुतच्छविः सोपानमार्गोज्वलो**
**दिव्यैर्दीपकरैर्विभूषितवरः स्वर्गोपमः कल्पितः ।७०।**

भावार्थ:—राजा को सेना सहित आमन्त्रित कर कामधेनु को दोहा। महर्षि जमदग्नि ने अद्भुत गजशाला, अश्वशाला, के रहने योग्य विचित्र गृह और तोरण(द्वार)सामन्तराजाओं के आवास हेतु सुन्दर भवन, उन में सुन्दर उद्यान, अनेक मञ्जिलों का श्रेष्ठ कान्तिमान् उज्वलसोपान मार्ग (सीढियों) वाला, दिव्यरत्नमय दीपकों की किरणों से युक्त उस महल में उपयोगी पदार्थ संचित थे इस प्रकार गोदोहन द्वारा राजोपयुक्त विशाल आवास का निर्माण हुआ ।७०।

—नृसिंह पुराणे ।

गोदोहोत्तरम् आवास प्रवेशाय जमदग्निना राजाद्याऽऽमन्त्रणम्:—

दुग्ध्वासौ जमदग्निराहनृपति राजन् गृहं ते कृतं
श्रेष्ठं त्वं विशमन्दिरञ्च सचिवा दिव्येषु गेहेष्वथ।
हस्त्यश्वाश्च विशन्तु सत्वरमिमे हस्त्यश्वशालाँ समे
नीचेष्वेषु विशन्तु ते भृतिकरा गेहेषु ये ते प्रियाः।७१।

भावार्थ:—गोदोहन पद्धति से आवास प्रस्तुति के पश्चात् महर्षि जमदग्नि ने राजा से कहा—हे राजन्! आपके लिये महल तैयार है आप इस में प्रवेश कीजिये। आपके ये श्रेष्ठ पुरोहित, मन्त्री, तथा अन्य प्रतिष्ठित लोग भी शीघ्र दिव्य गृहों में प्रवेश करें। विभिन्न जातियों के हाथी घोड़े आदि गजशाला, अश्वशाला में प्रवेश करें महल के प्रथम भूमिका में आपके भृत्यगण भी प्रवेश करें।७१। —नृसिंहपुराणे

जमदग्निद्वारा स्नानागार प्रदर्शनम्:—

स्नानार्थं नृप! कल्पितं वरमिदं सर्वोत्तमं स्त्रीशतं
स्नाह्यद्य त्वमिवामरेश्वरवरो नृत्यैश्च गीतैर्दिवि।
सुस्नातेऽर्जुनभूपतौ मुनिवरो द्वे दिव्यवस्त्रे ददौ
धृत्वा धौतमथोत्तरीयकनृपः कृतकृत्यविष्णवर्चनः।७२।

भावार्थ:—जमदग्नि महर्षि जी ने कहा—हे राजन्! आपको स्नान कराने के लिये मैंने इन सौ उत्तम स्त्रियों को नियत किया है। जैसे स्वर्ग में देवराज इन्द्र अप्सराओं के नृत्यगीत सुनते हुए स्नान करते हैं उसी प्रकार आप भी इन स्त्रियों के नृत्य

गीत से आनन्दित हो यथेष्ट स्नान करें। स्नान कर लेने के वाद मुनीश्वर ने उनको दो सुन्दर सुशोभित वस्त्र दिये धौतवस्त्र एवं उत्तरीय वस्त्र पहन कर राजा ने नित्यनियम करने के वाद भगवान् विष्णु की पूजा की ।७२। नृसिंहपुराणे

**गोदोहनोत्तरमन्नादिना सपरिच्छदो राज्ञः प्रसादनम्ः—**

**दुग्धवान्नं गिरिसन्निभं मुनिरसौ सभृत्यराज्ञे ददौ**
**राज्ञासौ बुभुजे यदा सपरिषत्सूर्यस्तदास्तं गतः।**
**रात्रौ गीतविनोदनादिभिरसौ शेते नपः पूर्ववत**
**प्रातः स्वप्नमिवाप्तवत्तदखिलं दृष्ट्वा नृपोऽचिन्तयत्।७३**

**भावार्थ**—तदनन्तर मुनीश्वर जी ने गोदोहन द्वारा अन्नमय महान् पर्वत का सम्पादन किया राजा एवं भृत्यगण ने जब भोजन कार्य सम्पन्न किया तव सूर्यास्त हो गया तब रात को भी मुनि निर्मित भवन में गीतवाद्यादि मनोरञ्जनों से आनन्दित हो शयन किया। तदनन्तर प्रभातवेला होते ही स्वप्न में मिली समस्त सम्पदी के समान सबकुछ लुप्त हो गया। पूर्ववत् सामान्य ऋषि का आश्रम मात्र शेष रह गया। ऐसा देख राजा मन ही मन विचारों के सागर में डूब गये ।७३।                                    —नृसिंह पुराणे।

कार्तवीर्यार्जुन राजपुरोहितयोः संवादः—

**किं शक्तिस्तपसो मुनेरियमहो सिद्धिः सुरभ्या नु गो–**
**रित्युक्तस्तु पुरोहितोऽवददृषेः सामर्थ्यमप्यस्ति गोः।**

**हर्तव्या न तथापि सा नरपते ! लोभात्त्वया कर्हिचिद्**
**यस्त्वेतां हि जिहीर्षुरस्ति मनसा तस्यास्तिनाशो ध्रुवम् ।७४**

भावार्थः—कार्तवीर्य राजा ने अपने राजपुरोहित से पूछा—राजपूज्य पुरोहित महोदय ! यह महात्मा जमदग्नि मुनि के तप की शक्ति थी या सुरभि (कामधेनु) गौ की। कार्तवीर्य के इस प्रकार पूछने पर राजपुरोहित ने कहा—हे नरपते ! ऋषि की भी सामर्थ्य है किन्तु यह सिद्धि गौ की ही है। तो भी हे नरेश्वर ! आप लोभ के वशीभूत होकर उस गौ का अपहरण मत करें क्यों कि जो उसे मनसे भी हर लेने की इच्छा करता है उसका निश्चय ही विनाश (सर्वनाश) हो जाता है ७४।                                                    नृसिंह पुराणे

**राजपुरोहितस्य वचनंश्रुत्वा प्रधानमन्त्रि कृतादुर्मन्त्रणाः—**

**पक्षस्यैव निजस्य पोषण वशाद्राज्ञां विधेयेऽन्यथा**
**पश्येन्नैव कदापि भूपतिहितं विप्रोहि विप्रप्रियः ।**
**नास्तीदृक् सुरभिस्त्वदीयसकले राज्येऽपि या दृश्यते**
**सैषा धेनुरनुत्तमा नरपते योग्या तवैवाधुना ।७५।**

भावार्थ.—राजपुरोहित के हितकर वचनों को सुनकर प्रधानमन्त्री बोला—हे महाराज ! ब्राह्मण अपने ही पक्ष का पोषक होने से राजकार्य की कोई परवाह नहीं करता नाही कभी राजा की भलाई देखता है क्यों कि ब्राह्मण ब्राह्मण का ही प्रेमी होता है। इस प्रकार की सुरभि गौ कोई नहीं जो आपके

समस्त राज्य में कहीं भी दिखाई देती हो वैसी दुर्लभ गाय यही है जिसकी तुलना संसार में कहीं नहीं यही वह श्रेष्ठ गौ है जो केवल आपके योग्य है।७५। —नृसिंह पुराणे

विशेष:—तदनन्तर उस दुर्बुद्धि महामन्त्री ने राजा से कहाकि यदि आप आज्ञा दें तो मैं इसे स्वयं जाकर ले आऊंगा। केवल आप मुझे आज्ञा दीजिये, राजा ने मन्त्री को 'तथास्तु' कह कर अनुमति देदी। राजमन्त्री आश्रम पर पहुंच कर गौ का अपहरण करने लगा। जमदग्नि ने उसे हर प्रकार से समझाबुझा कर निषेध किया किन्तु उस दुर्मन्त्री ने एक न सुनी महामुनि से कहा—हे बुद्धिमान् ब्राह्मण यह गौ राजा के योग्य है इसे राजा को दे दो आप साग और फल खाने वाले हैं आपको इस गाय से क्या काम है? इतना कह

मन्त्री उसे बल पूर्वक लेने लगा तो मुनिने स्त्री सहित उसको रोका तो दुष्ट हत्यारे मन्त्री ने उस मुनि का बध कर दिया मन्त्री ने ज्यों ही उसे ले जाना चाहा त्यों ही वह दिव्य गौ आकाश मार्ग से चली गई राजा मन ही मन क्षुब्ध होकर माहिष्मती नगरी को आ गया। रेणुका ने २१ वार अपनी छाती को पीट कर विलाप करने लगी यह सुन परशुराम

ने आकर कहा कि मातः? आगे प्रहार मत करें आपने २१ प्रहार छाती पर किये हैं मैं इस राजा को मार कर २१ वार नक्षत्र पृथ्वी करूंगा। यह कह कर वह माहिष्मती को जाकर राजा से निपटा। राजा को समाप्त करने पर उसकी आत्मज्योति परशुराम जी में समा गयी। नृसिंह पुराण

कार्तवीर्यस्य मुनेर्धेनुग्रहणाय दुराग्रहः—

**दुर्बुद्धिः सचिवाज्ञया स नृपधूर्धेनुं ययाचे मुनिं**
**भिक्षां देहि मुने ! तपोधन ! यते ! मह्यं हविर्धानिकाम् ।**
**नादेयं किल भारते किमपि यन्नो दीयते दातृभि-**
**र्देवेभ्यश्च ददौ दधीचिमुनिराट् स्वास्थि पुरा श्रूयते ।७६**

भावार्थः—मन्त्री की दुर्मन्त्रणात्मक आज्ञा से वह दुर्बुद्धि समस्त राजाओं का अग्रगण्य कार्तवीर्य राजा जमदग्नि महर्षि से सुरभि गौ की भिक्षा मांगने के लिये तैयार हुआ—हे मुने ! तपोधन ! यतिवर मुझे कामधेनु गौ की भिक्षा दीजिये भारत में कोई भी वस्तु ऐसी नहीं जिसका दाताओं के द्वारा दान नहीं दिया जाता । प्राचीनकाल की जनश्रुति है कि मुनिराज दधीचि महर्षि ने देवताओं को इन्द्रवज्र बनाने के लिये अपने शरीर की अस्थिएं भी दे दी थी ।७६। —ब्रह्मवैवर्तपुराणे

हैहयाधिपस्य पुनर्याचनम:—

**स्रष्टुं त्वं जमदग्निरग्निकृपया चैकोऽपि साक्षात्प्रभु-**
**र्नाना कामदुधाः क्वचैकसुरभिर्भ्रूभङ्गभूलीलया ।**
**भृत्यायातिथयेऽविचार्य सहसा मूर्धाभिषिक्ताय वै**
**भिक्षाँ कल्पतरो ! प्रदेहि सुरभिं मह्यं प्रपन्नाय च ।७७**

भावार्थः—अग्निदेव की कृपा से तुमारे जमदग्नि जैसे एक होते हुए भी अनन्त कामधेनुगौओं की भ्रूभङ्गमात्रलीला से सृष्टि रचने में साक्षात् प्रभु हैं सर्वसामर्थ्यवान् हैं एक सुरभि की

तो वात ही क्या है ? अत: मेरे जैसे दास, अतिथि, मूर्धा-भिषिक्त राजा होन पर भी शरणागत को भिक्षा के रूप में कामधेनु का दान करदें । आप तो साक्षात् कल्पवृक्ष हैं हो अत: विना विचारे शीघ्र कामधेनु की भिक्षा दे दें अर्थात् तुरन्त दान महापुण्य की कसौटी को परखिए ।७८।

—ब्रह्मवैवर्तपुराणे

कामधेनु विवरणम् :—

**विद्या ब्राह्मण माजगाम सुह वै गोपाय मा शेवधि-**
**ष्टेऽहं माऽनृजवेऽयताय च न माँ मासूयकायेत्यपि ।**
**ब्रूया वीर्यवती तथाहमिह वै स्यां कामदोग्ध्री ध्रुवं**
**राज्ञाँ कामदुघा सदेयमचला विद्या पुरोजन्मनाम् ।७८।**

भावार्थ —विद्या ब्राह्मण के पास आगयी आकर ब्राह्मण को कहती है, कि हे ब्राह्मण मेरी रक्षा कीजिये मैं सुरक्षित होकर तुमारा सुखों का निधान बन जाऊंगी । पर निन्दक. मन वाणी और देह की बिषम प्रवृत्ति वाले. अशुचीन्दिय (संयमरहित) इन तीन व्यक्तिओं के साथ मेरी चर्चा मत करना तब मैं प्रबलपुष्ट हो जाऊगी । अर्थात् मैं कामधेनु बन जाऊंगी । राजाओं की कामधेनु यह पृथ्वी है और ब्राह्मणों की कामधेनु साक्षात् विद्या है ।७८।

कामधेनो: प्राप्तिपरम्पराख्यानम् —

**गो लोकेऽध्वर ब्रह्मणे भगवता कृष्णेन दत्ता क्रतौ**
**सेयं कामदुघा स्वपुत्रभृगवे दत्ता पुरा ब्रह्मणा ।**

दत्तेयं भृगुणा प्रियाय कपिला मह्यं स्वतः पैतृकी
गोलोकोद्भव दुर्लभा विभुवने मे कामधेनुर्नृपः ।७९।

भावार्थः—जमदग्नि महर्षि कहते हैं–हे राजन् ! गोलोक में भगवान् श्रीकृष्ण जी ने एक यज्ञ महोत्सव में ब्रह्माजी को यही वह कामधेनु प्रदान की। ब्रह्मा ने वही कामदुघा गौ अपने प्रथम प्रिय पुत्र भृगुमहर्षि को दी भृगुमहाराज जी ने वही कपिला गौ अत्यन्त प्रिय समझ कर अपने आप मुझे देदी यही मेरी पैतृकी सम्पदा है गोलोक में उत्पन्न होने के कारण यह मेरी कामधेनु तीनों लोक में दुर्लभ है ।७९।

—ब्रह्मवैवर्तपुराण

अस्यालोकोत्तर कामधेनोः पुनःसृष्टिर्दुर्लभेतिकथनम्ः—

ज्ञानध्यानयुतोऽपि वञ्चक ! हठिन् ! राजन् ! ब्रवीषि वृथा
या स्वप्नेऽपि सुदुर्लभा कथमिमां स्रष्टुं प्रभुर्मादृशः ? ।
विप्रोऽहं किल दातुमुद्यत इतः किं क्षत्रियायाधम ?
प्राणेभ्योऽपि परादभुतधना स्रष्टुं भवेल्लोलया ।८०।

भावार्थः—ज्ञानध्यानादि सत्साधनों से युक्त होने पर भी हे वञ्चक ! दुराग्रही राजन् वृथा भाषण करते हो स्वप्न में भी जिस की प्राप्ति होना दुर्लभ हो; भला इस कामधेनु की सृष्टि मेरे जेसा मानव कैसे कर सकता है। मैं ब्राह्मण हूं निश्चय से दान करने के लिये तैयार भी हो जाऊं तो तुमारे जैसे अधम क्षत्रिय को देदूं। शास्त्र में कुटिल म गंगामी

(अनृजु , अशुचीन्द्रिय (अयत), परापवाद निपुण (असूयक) इन के साथ इसकी चर्चा करना भी निषिद्ध है। प्राणों से भी प्रिय अत्यन्त अद्भुत धन निधान सृष्टि भ्रूभङ्गलोला मे सृष्टि कहकर वृथालाप कर रहे हो।८०। —ब्रह्मवैवर्तपुराण

मुनेः पुना राज्ञोऽव बोधनम्:—

**नाहं रेऽधम ! हालिकोऽस्मि च यतः कच्चित्त्वयोत्थापितः**
**सद्योऽत्रातिथिवर्जितं यममपि कर्तुं क्षमो भस्मसात् ।**
**गच्छ त्वं गृहमेत्य पश्य तनयस्त्रीत्यादिकं पामर !**
**मत्कोपं न च दैवबाधित नृप ! प्रावर्द्धय त्वं मुधा ।८१।**

भावार्थः—रे ! अधम ! मैं हलखेंचने वाला बल नहीं हूं जब उठाओ और काम लेलो कभी जीवन में इस वन में आपने कोई प्रोत्साहन दिया है। अतिथि के अतिरिक्त बिरुद्ध होकर साक्षात् मृत्यु का देवता यमराज भी आजाए तो उसको भस्मसात् कर देने को समर्थ हूं। हे पामर ! तुम घर चले जाओ घर जाकर अपने पुत्र और स्त्रियों की प्रजा सहित देखभाल करो। हे राजन् ! आपका विपरीत भाग्य आप के जीवन के मार्ग में बाधा डाल रहा है। तुम मेरे क्रोध को व्यर्थ ही मत बढाओ।८१। —ब्रह्मवैवतपुराण

कार्तवीर्यार्जुनःक्रुद्धाः सेनापतिं बलादपहर्तुमादिशतिः—

**श्रुत्वैतच्चुकुपे नृपोऽर्जुनमहान् विपरीतदैवोऽभवत्**
**गत्वा सैन्यपतिं प्रचोदनपरो धेनुं जिहीर्षुर्बलात् !**

**गां चोपेत्य मुनीरुदन् स सुरभिं संश्रावयत्तद्व्यथां**
**श्रुत्वानुग्रहकातराथ सुरभिः प्रोवाच विप्रं वचः ।८२।**

भावार्थ:—महामुनि जमदग्नि जी के उक्त वचनों को सुनकर कार्तवीर्यार्जुन क्रोध से पागल होने से राजा का भाग्य अत्यन्त विपरीत हो गया। अतः राजा सेनापति के पास जाकर उसे कामधेनु को बलात् अपहरण करने के आदेश की प्रेरणा देने लगा। उधर मुनीश्वर जमदग्नि जी ने रोदन करते हुए कामधेनु के पास जाकर समस्त व्यथा की कथा सुनादी। भक्तानुग्रह करने वाली कामधेनु ने ब्राह्मणाग्रगण्य मुनि जी के हित की बात कही ।८२। —ब्रह्मवैवर्तपुराण

कामधेनोर्मुनये सम्मतिदानम्:—

**इन्द्रो वाप्यथ हालिको निजधनं दातुँ प्रभुः स्वेच्छया**
**शास्ता पालयिता पितापि च निजं द्रव्यं पुरासञ्चितम् ।**
**स्वेष्टं दास्यसि मां नृपाय च मुने यास्यामि तेऽनुज्ञया**
**राजानं न ददासि माँ क्वचिदितो यास्यामि नो ते गृहात्।८३**

भावार्थ:—इन्द्र हो या हलवाहा कोई भी निजीधन को अपनी इच्छा से दान कर सकता है। इसी प्रकार शासक पालक, पिता इत्यादि सभी दाता बनकर अपने पूर्वसञ्चित धन को स्वेच्छा से दान कर सकता है। यदि स्वेच्छा से मुझे राजा को दे दोगे तो हे मुने! मैं तुमारी सहमति से उसी के साथ चली जाऊंगी। यदि आप मुझे राजा को नहीं दोगे तो तेरे इस घर से कहीं भी नहीं जाऊंगी ब्रह्मवैवर्तपुराण

धेनोर्मुनये पुनः सम्मतिदानम्:—

**मत्तो दत्तबलेन भूपतिमिमं स्वक्षणोश्च दूरीकुरु**
**मायामोहितचेतनः शिशुरुत सर्वज्ञोऽपि त्वं रोदिषि।**

**इत्युक्त्वा हि सुषाव गौस्तु विविधान्यस्त्राणि शस्त्राणि च**
**सैन्यान्यर्कप्रभाणि धेनुवदनात् कोटित्रयं खड्गिनाम् ।८४**

भावार्थ —मेरे द्वारा दिये सैनिक बल से इस राजा को आंखों से ओझल करदो। माया से मोहितचित्त होकर सर्वज्ञ होते हुए भी आप दूधमुख बालक की तरह विलख रहे हो। इतना कहकर कामधेनु सैनिक बल सृष्टि के आरम्भ में सूर्य की तरह चमकते हुए अनेक प्रकार के शस्त्र अस्त्रों का रचना करने लगी। सर्वप्रथम गौ के मुखारविन्द से तीन अक्षौहिणी सेना खड्गधारी वीरों की उत्पन्न हुई ८४।

ब्रह्मवैवर्त पुराणे

गोशरीरात् सेनोत्पादनम्:—

**नासाभ्यां किल पञ्चकोटि प्रमिता जाता महाशूलिनः**
**नेत्राभ्याँ शतकोटि धन्विषु वराः शीर्ष्णोऽभवन्दण्डिनः।**

**कोटीनां त्रितयं च शक्तिनिभृतः वक्षस्थलात्सम्भवाः**
**पृष्ठात्कोटि शतं गदाधरभटाः पड्डूचश्च भाण्डीरवाः ८५**

भावार्थः—दोनों नथुनों से पांच अक्षौहिणी सेना में महात्रिशुल धारी प्रबल योधागण, दोनों नेत्रों से सौ अक्षौहिणी सेना में धनुषधारी योधा, कपाल से तीन अक्षौहिणी सेना में दण्डधारी

भट, छाती से तीन अक्षौहिणी सेना में शक्तिधारी महावीर, पृष्ठदण्ड से सौ अक्षौहिणी सेना में गदाधारी सैनिक, पैर के तलुओं से वाद्यवादक भाण्ड अनेकों उत्पन्न हुए।८५।

—ब्रह्मवैवर्तपुराणे

पुन: सैन्योत्पत्ति विवरणम्:—

**और्वाः कोटित्रयं च राजकुलजागुह्याच्च म्लेच्छान् ददौ**
**दत्वा सैन्यबलं स्वतो हि मुनये "युध्यस्व त्वं निर्भयः"।**
**सर्षिः प्राप्यबलं सहर्षमतुलं दृष्ट्वा चरोऽगान्नृपं**
**धेनोः सैन्यबलं निजं परिभवं श्रुत्वा च त्रस्तो नृपः।८६।**

भावार्थ:—जंघाओं से तीन अक्षौहिणी सेना में राजकुलोत्पन्न योधा एवं गुह्यप्रदेश से तीन अक्षौहिणी सेना म्लेच्छयोधागण (जङ्गली भील) जमदग्नि महर्षि को स्वेच्छा से प्रदान किये इस प्रकार मुनि को२२० अक्षौहिणी सेना देकर कहा कि अब "तू निर्भय होकर युद्ध कर"। वह ऋषि सैनिक बल को प्राप्त कर अति हर्षित हुआ और उधर यह देख राजा के गुप्तचर ने राजा के समीप जाकर उससे कामधेनु के सैनिक बल एवं उसके द्वारा अपनी पराजय सुनकर राजा अत्यन्त भयभीत हो गया।८६।

अक्षौहिणीनिर्णय:—

**एकेभैकरथात्र्यश्वा पत्तिः पञ्च पदातिका।**
**पत्त्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम्॥**

**सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः ।**
**अनीकिनी दशानीकिन्योऽक्षौहिणी च निगद्यते ।। इत्यमरः -**

## अक्षौहिणी सेना तालिका:-

| गुणकांक | रथाः | गजाः | पदातयः | तुरगाः | सेनानामानि |
|---|---|---|---|---|---|
| | १ | १ | ५ | ३ | पत्तिः |
| पत्ति × ३ | ३ | ३ | १५ | ९ | सेनामुखम् |
| सेनामुख × ३ | ९ | ९ | ४५ | २६ | गुल्मः |
| गुल्म × ३ | २७ | २७ | १३५ | ८१ | गणः |
| गण × ३ | ८१ | ८१ | ४०५ | २४३ | वाहिनी |
| वाहिनी × ३ | २४३ | २४३ | १२१५ | ७२९ | पृतना |
| पृतना + ३ | ७२९ | ७२६ | ३६४५ | २१८७ | चमू |
| चमू × ३ | २१८७ | २१८७ | १०९३५ | ६५६१ | अनीकिनी |
| अनीकिनी × ३ | २१८७० | २१८७० | १०९३५० | ६५६ ० | अक्षौहिणी |

**राज्ञः पुनर्युद्धं महतीं सेनासंगृह्य मुनिप्रति दूतप्रेषणम्:—**

**राजासौ भयकातरश्चरवरैः संगृह्य सेनाबलं**
**प्राज्यं राज्यमसौ विधाय वशगं दूतं मुनेः सन्निधौ ।**
**"युद्धं देह्यथवेप्सितां स्वसुरभिं" दूतोऽवदत्प्रेषितः**
**दातुं ते ऽप्रभुरस्मि भूप ! सुरभिं युद्धं कुरु ब्रूहि रे ।८७।**

**भावार्थः**—भय से कातर उस राजासहस्रबाहु ने अच्छे राजदूतों द्वारा अपने विशाल राज्य को वश में करके अपना दूत

मुनि के पास भेजा। उसने राजाज्ञा से कहा "मुनिवर! युद्ध कीजिये अथवा मेरी वाञ्छित कामधेनु दे दीजिये" तब मुनीश्वर बोले—"मैं अपनी प्राणों से प्यारी कपिला देने में असमर्थ हूं एवं जाकर कहो कि युद्ध अवश्य कर सकते हैं" ।८७।

दूतस्य भयकातरं धृतकवचं भूपं राजसभायां वृत्तश्रावणम्:—

**राजानं भयकातरं सकवचं वार्तां च दूतोऽवदद्**
**ऊचे तां कपिलामितो मुनिवरो नौः कर्णधारादृते।**
**यद्वत्स्यादनियन्त्रिता हि मदृते तद्वच्चमूर्भूदशा**
**तुष्टा धेनुरनन्तरं मुनिवरं युद्धस्य शिक्षाँ ददौ ।८८।**

भावार्थः—मुनि से दूत ने भय के कारण कवचधारण कर सभा में बैठे राजा से सारा वृत्तान्त सुना दिया। इधर मुनिने कपिला से कहाकि मैं किं कर्तव्य विमूढ हो गया हूं: क्योंकि जैसे कर्णधार के विना नौका अनियन्त्रित रहती है, वही दशा मेरे विना सेना की हो रही है" ।८८।

कामधेनोः मुनये समुद्बोधनम्:—

**शत्रुं जेष्यसि निश्चितं भवतु ते शान्त्या हि युद्धे जयं**
**मृत्युस्ते भविता ध्रुवं न च मुनेऽमोघास्त्र शस्त्रादृते।**
**राज्ञासार्धमयुक्तमुक्तमनघैर्युद्धं च विप्रस्य ते**
**दत्तात्रेय गुरो विनेयप्रवरेणामोघशक्त्याभृता ।८९।**

भावार्थः—कामधनु ने युद्ध शिक्षा के वाद कहा कि 'मुनिवर ! आपकी जय हो। आप युद्ध में निश्चय ही शत्रु को शान्ति से ही जीत लेंगे तथा यह भी ध्रुव (निश्चय) है कि अमोघ दिव्यास्त्र के बिना आपकी मृत्यु नहीं होगी। आप ब्राह्मण हैं; आपका दत्तात्रेय के शिष्य एवं अमोघ शक्तिधारी राजा के साथ युद्ध होना युक्ति सङ्गत नहीं है। इतना कह कर कपिला मौन हो गयी।८९। —ब्रह्मवैवर्तपुराणे

जमदग्नि कार्तवीर्यार्जुनयोर्युद्धम्:—

**सज्जीभूतबलं समं स मुनिराट् संगृह्य प्राप्तो रणे**
**नत्वा तं मुनि पुँगवं स नृपतिर्योद्धुँ जगामार्जुनः।**
**युद्धं तत्र सुदुष्करं बलवतोर्जातं द्वयोः सैन्ययो-**
**र्जित्वा कापिलसेनया नृपबलं भग्नश्च राज्ञोरथः ९०।**

भावार्थ—सजी हुई समस्त सेना को लेकर जमदग्नि रणस्थल में पहुंच गये एवं मुनि को प्रणाम करके राजा कार्तवीर्य भी युद्ध में आधमका दोनों की सेनाओं का परस्पर घमासान घोर युद्ध हुआ कपिला की सेनाने राजा की समस्त सेना को जीतकर राजा का रथ भी चूर-चूर कर दिया।९०।
—ब्रह्मवैवर्तपुराण

राज्ञोमूर्छायां सैन्यनाशः पलायनञ्चः—

**सा सेनाद्भुतकापिली नरपतेश्चिच्छेद चापं मुदा**
**राजासौ कपिलोद्भवं भटबलं जेतुं क्षमो नाभवत्।**

**वृष्टिं शस्त्रमयं ववर्ष पृतना राजाभवन्मूर्च्छितो-**
**-राज्ञः सैन्यहतस्य मूर्च्छित दशां दृष्ट्वातिथेर्भार्गवः ।९१।**

भावार्थः—फिर राजा के साथ लडती हुई कपिला की सेनाने राजा के धनुष को भी हंसते-हंसते ही काट दिया। इस प्रकार राजा उस कपिला की सेना को जीतने में असमर्थ हो गया। उस सेना ने शस्त्रों की वर्षा से राजा को शस्त्र रख देने के लिये विवश कर दिया। तत्पश्चात् शस्त्रों की वर्षा से राजा मूर्छित हो गया राजा की कुछ सेना मर चुकी कुछ भाग चुकी थी ९१। —ब्रह्मवैवर्त पुराणे

कापिली सेनोपसहारः राज्ञोमूर्छापनयनम् —

**अन्वाकम्पितचेतनः समुनिः समुपजह्रेऽशेष सैन्यं मुनिः**
**लीनन्तत्सुरभौ हि कृत्रिमबलं दत्वाऽऽशिषा पद्रजः ।**
**स्मृत्वासौ समनुः कमण्डलुजलैर्भूपं ससंज्ञं व्यधाद्**
**भक्त्योत्थाय नृपो ननाम शिरसा बद्धाञ्जलिः सन्मुनिम्।९२**

भावार्थः—जब कृपासागर मुनिवर जमदग्नि ने देखा कि मेरा अतिथि बना हुआ रजराजेश्वर कार्तवीर्य मूर्छित हो गया है तब कृपा परबर हो उन्होंने सेना का मन्त्र स्मरण पूर्व उप संहार कर लिया। फिर वह कृत्रिम सेना सुरभि के शरीर में लीन हो गयी। तदनन्तर कृपालु मुनिने शीघ्र ही राजा को अपनी चरण की धूलि देकर 'तुमारी जय हो' ऐसा शुभाशीर्वाद प्रदान किया और अपने कमण्डलु के जल से

छींटे देकर उसे चैतन्य कराया। होश में आने पर वह राजा युद्धभूमि में उठकर खड़ा हो गया। और भक्तिपूर्वक हाथ जोड़े हुए उसने मुनिवर को सिरझुका कर प्रणाम किया। तब मुनिने राजा को शुभाशीर्वाद देकर हृदय से लगाकर उसे स्नान भोजनादि से तृप्त किया।९२। —ब्रह्मवैवर्तपुराणे

जमदग्नेः राज्ञः समुद्बोधनम् —

**विप्राणां हृदयं भवन्ति सततं हैयङ्गवीनोपमं**
**त्वन्येषां क्षुरधारसन्निभमसाध्यं दारुण मानसम्।**
**'राजन्! गच्छ गृहांश्च पश्य तनयस्त्रीत्यादिकं' 'नोप्रभो!**
**युद्धं देह्यथवेप्सितं स्वसुरभिं सद्यः कृपालो! मुने'!।९३।**

भावार्थः—ब्राह्मणों का हृदय सदा माखन की तरह कोमल होता है। परन्तु दूसरों का हृदय सदा छुरे की धार के समान तेज, असाध्य एवं दारुण होता है। तत्पश्चात् मुनिवर ने कहा—नरेश! तुम अपने घर लौट जाओ और अपने पुत्र स्त्रीत्यादि की देखभाल करें। तब राजाने कहा—महाबाहो! कृपालो! मुने। युद्ध कीजिये अथवा मेरी अभीष्ट गौ मुझे समर्पित कीजिये।९३। —ब्रह्मवैवर्तपुराणे

जमदग्नि कार्तवीर्ययोयुद्धम्:—

**आरुह्यान्यरथं मुनिं नृपवरो नत्वाथयोद्धुं क्रुधा**
**सन्नाहं भगवान्मुनीश्वरवरो योद्धुं शरान् सन्दधे।**
**गोदत्तास्त्रवरैः पुनर्नृपवरं सन्यस्तशस्त्रं व्यधात्**
**मूर्च्छां प्राप्य सचेतनोऽथ मुनिना कोपेन योद्धुं गतः ९४।**

**भावार्थ**:—मुनि के वचनों को अनसुने कर राजा ने मुनिवर को प्रणाम किया और एक दूसरे रथ पर आरूढ होकर 'युद्ध दीजिये" ऐसे ललकारा। तब मुनि भी कवच धारण करके उससे युद्ध करने के लिये उद्यत हुए। क्रोध के कारण राजा की बुद्धि मारी गयी थी। अतः वह मुनि के साथ जूझने लगा। मुनिने कपिला द्वारा दी गई शक्ति एवं शस्त्र के बल से राजा को शस्त्र हीन करके मूर्छित कर दिया। तब कमल लोचन राजा कार्तवीर्य पुनः चेतन हो युद्ध में जमदग्नि के साथ क्रोधपूर्व लोहा लेने लगा।९४।

—ब्रह्मवैवर्त पुराणे

**जमदग्निकार्तवीर्यार्जुनयोर्युद्धम्**:—

**आग्नेयं समरेऽक्षिपन्मुनिवरे क्रुद्धो नृपो हैहयः—**
**स्त्वाप्वस्त्रेण मुनीश्वरो ह्यशमयद्वायव्यमस्त्रं नृपः।**
**गान्धर्वं जमदग्निरित्थमनघो नागास्त्रकं भूपतिः—**
**श्चिक्षेपाथ च गारुडं मुनिवरो माहेश्वरास्त्रं नृपः।९५।**

**भावार्थ**:—कोपाकुल हैहयराज ने आग्नेयास्त्र मुनिराज पर फैंका। आपु (वरुण) आप्वस्त्र (वारुणास्त्र) से मुनिने उसको शान्त कर दिया। फिर वायव्यास्त्र कार्तवीर्यार्जुन ने चलाया मुनिने उसीक्षण गान्धर्वास्त्र द्वारा निवारण किया। फिर महिष्मती नरेश ने रणस्थल में नागास्त्र छोड़ा मुनीश्वर ने गारुडास्त्र से उसका वारण कर दिया फिर हैहय नरेश ने माहेश्वर अस्त्र का प्रयोग किया।९५।

सन्दीप्तं शतसूर्य सन्निभमहो वैष्णव्यमस्त्रं मुनिः
पश्चान्मन्त्र पुरस्सरं मुनिरसौ नारायणास्त्रं दधे ।
मूर्ध्नातं प्रणनाम भूपतिरसौ प्रेम्णा प्रपन्नोऽभवत्
कृत्वोर्ध्वं भ्रमणं क्षणं दशदिशो दीप्त्वा स्वतोऽन्तर्दधे ।९६

भावार्थः—जो सैकडों सूर्यों के समान कान्तिमान् एवं दशों दिशाओं को उद्दीप्त करने वाला था मुनीश्वर ने वैष्णव्यास्त्र से उसे निवारण किया। तत्पश्चात् मन्त्र प्रयोगपूर्वक नारायणास्त्र का अनुसन्धान कर राजा पर छोड़ा। उस अस्त्र को देखकर महाराज कार्तवीय उसे नमस्कार करके प्रेम से शरणागत हो गया। तब प्रलयाग्नि के समान वह अस्त्र वहां ऊपर ही ऊपर घूमकर क्षणभर तक दशों दिशाओं को प्रकाशित करके स्वयं अन्तर्धान हो गया ।९६।

अस्त्रं जृम्भणमक्षिपन्मुनिरयं भूपं रणे स्वापयद्
अर्धचन्द्रशरेण सारथिरथौ छत्रे क्षुरप्रेण च ।
नागास्त्रेण निबद्धय तस्य सचिवान् भूपं समादर्शयत्
उन्मोच्यामृत मन्त्रविन्नृपवरं गच्छ गृहान् स्वान्नृप ।९७।

भावार्थ—उसके पश्चात् मुनि ने रणस्थल में जृम्भणास्त्र छोडा उस अस्त्र के प्रभाव से राजा को निद्रा ने आघेरा और मृतक तुल्य होकर सो गया तब राजा को निद्रित देखकर उसीक्षण अर्धचन्द्र द्वारा उस भूपाल के सारथि रथ धनुष-

वाणादि छिन्नभिन्न कर दिया। क्षुरप्र से मुकुट छत्र और कवच को काट डाला। फिर नागास्त्र से राजा के मन्त्री आदि को बान्धकर कैद कर लिया सभी को लेकर राजा को दिखा कर लीलामात्र में तत्काल मन्त्रों द्वारा राजा को मुक्त कर राजा को आशीर्वाद देकर कहा—राजन्—अब अपने घर जाइये ।९७।

**क्रुद्धः शूलकरः समुत्थितनृपश्चिक्षेप श्रेष्ठं मुनौ**
**शक्त्यासौ मुनिरच्छिनद्विधिवशाद्ब्रह्मा समभ्यागतः ।**
**सुप्रीतिं मुनिभूपयोरपि मिथोऽसौ कारयामास वै**
**नत्वा तं ह्युभावपि विधिजग्मुश्च स्वान्स्वालयान् ।९८।**

**भावार्थ**—फिर राजाने क्रुद्ध हो उठकर त्रिशूल उठा लिया। और यत्न पूर्वक मुनि पर चलाया। तब मुनि ने उस पर शक्ति का प्रहार किया। इसी बीच उस युद्धस्थल में ब्रह्मा ने आकर उत्तम नीति द्वारा उन दोनों में परस्पर प्रेमस्थापित करा दिया। तब मुनिने सन्तुष्ट होकर रणक्षेत्र में ब्रह्माके चरणों में प्रणिपात किया और राजा ब्रह्मा तथा मुनिको नमस्कार कर अपने घर को प्रस्थान किया। फिर मुनि और ब्रह्मा भी अपने २ भवन को चले गये।९८। ब्रह्मवैवर्तपुराणे

**ससैन्य राज्ञस्तपोवन गमनम्**—

**राजा विस्मितमानसो गृहमगात् स्मृत्वा हरिंभूपतिः**
**नीत्वालक्षचतुष्टयं रथगणं सूतादशघ्नास्ततः ।**

**हस्त्यश्वेन्द्र पदात्तयो ह्यगणिता राजाधिराजाश्च ते**
**त्रैलोक्यं वै जयकांक्षया नृपवरो मन्ये मुनेराश्रमम् ।९९।**

**भावार्थ:**—राजा घर लौट तो गया पर उसके मन में युद्ध की धुन लगी रही। इससे उसने लाखों सेना सग्रह करके फिर जमदग्नि के आश्रम पर जाकर आश्रम को घेर लिया उस सेना में चार लाख रथ, रथ संख्या से दस गुणा रथ को सम्भालने वाले सारथि महारथी। असंख्य अश्वेन्द्र, गजेन्द्र और पैदल एवं असंख्य राजाधिराज भी विद्यमान थे मानो त्र्यैलोक्य की विजय के लिए राजा की विजय यात्रा की योजना का महोत्सव उमड़ पड़ा हो ।९९।

**संवेष्टचाथरथस्थवर्मसहितः श्रीकार्तवीयार्जुनः**
**सेनावाद्यरवैर्भयेन सकलाः मूर्छामवापुर्नराः ।**
**नीत्वा तां सुरभिं बलान्नृपवरो गन्तुं मनाः स्वांपुरी–**
**मुत्तस्थौ सशरं धनुः स मुनिराडेको हि ध्यायन्हरिम् ।१००**

**भावार्थ:**—रथारोही कवचधारी श्रीकार्तर्यार्जुन राजा ने मुनि के आश्रम को घेर लिया सेना के दुर्भेद्यवाजों के शब्द से भयभीत होकर समस्त आश्रम बासी लोग मूर्छित हो गये। उस कामधेनु गाय को लेकर बलात् अपनी पुरी माहिष्मती को जाने लगा तो अकेले ही मुनिराज जमदग्नि धनुष बाण हाथ में लेकर भगवान् विष्णु का ध्यान करते हुए राजा के सन्मुख युद्ध में आ धमके ।१००।

चक्रेऽसौ शरजालमाश्रमनिजं चच्छाद तद्वर्मव-
च्चक्रेऽन्यच्छरजालकं मुनिरसौ सैन्यं समं चावृणोत् ।
दृष्ट्वा भूपवरोऽथ तं मुनिवरं नत्वा गृहीत्वाशिषं
स्वारुह्याथ रथं मुनिवरे चिक्षेप शस्त्रास्त्रकम् ।१०१।

भावार्थः—मुनिवर ने बाणों के जाल से अपने आश्रम को ऐसा सुरक्षित कर लिया मानो मनुष्य की रक्षा के लिये उसे कवच पहनाया गया हो। दूसरे शरजाल से समग्र सेना को घेर लिया। यह देख राजा ने मुनीश्वर को दण्डवत् प्रणाम कर आशीर्वाद ग्रहण करके पुनः रथपर चढ़कर उसने मुनि पर शस्त्र, अस्त्र, गदा, शक्ति आदि का प्रहार किया १०१।

विच्छेदाद्भुतलीलया मुनिरसौ चिक्षेप दिव्यास्त्रकं
तच्चाप्याच्छिनदेकलो नृपवरश्चिक्षेप शूलं मुनौ ।
छित्वातच्च मुनीश्वरः पुनरसौ कृत्वेषुजालंमह-
च्छस्त्रौघैः प्रतिवारकैर्नृपबलं गन्तुं ह्यशक्तं व्यधात् ।१०२

भावार्थः—राजा के द्वारा चलाये हुए चारों शस्त्र, अस्त्र, गदा शक्ति आदि को मुनि ने लीला मात्र में काट दिया। फिर मुनि ने दिव्यास्त्र राजा पर छोड़ा तो अकेले ही राजा ने उसे काट गिराया फिर मुनि पर शूल का प्रहार किया मुनिने उसे भी काट दिया। फिर मुनीश्वर ने बाणों का जाल बिछाकर एवं राजा के सभी शस्त्रों को काट कर राजा की सेना को जकड कर जाने में असमर्थ कर दिया ।१०२।

**जृम्भेणास्त्रबलेन तेन मुनिना सर्वेऽपि विजृम्भिताः**
**हस्त्यश्वा रथ पत्तयोऽपि सकला सेना च व्यर्थी कृताः ।**
**दृष्ट्वानिद्रितलोचनं नृपवरं जघ्ने कृपालुर्न तं**
**नीत्वा तां कपिलां मुनीश्वर वरो गन्तुँ गृहं चोद्यतः ।१०३**

भावार्थः—जृम्भास्त्र बल से उस मुनि ने सभी हाथी घोड़े रथी पदलादि सेना को व्यर्थ (वेकार) कर दिया। राजा को सुषुप्त देखकर भी कृपापात्र होने से उसे अनेक बार मूर्छित होने पर भी जान से नहीं मारा मुनीश्वर उस कपिला को लेकर अपने आश्रम पर जाने के तैयार हुए ।१०३।

**राजा प्राप्त सुचेतनां मुनिवरं धृत्वा धनुर्वारुणत्**
**त्रस्तासौ कपिला जगाम कुटजे त्यक्त्वाथ युद्धस्थलम् ।**
**आदाय स्वशरं धनुर्मुनिरसौ तस्थौ सशङ्कोज्झितः**
**ब्रह्मास्त्रं सनृपोऽक्षिपन्मुनिवरे सद्योऽशमत्तन्मुनिः ।१०४।**

भावार्थः—राजा तत्क्षण चेतन होकर धनुष हाथ में लेकर मुनि को रोककर खडा हो गया डरी हुई कपिला युद्धस्थल को छोडकर अपने स्थान पर चली गयी मुनि भी धनुषबाण लेकर नि शंक होकर युद्ध के लिये डट गया। उस राजा ने ब्रह्मास्त्र लेकर मुनि पर प्रहार किया तो मुनिवर ने ब्रह्मास्त्र से शान्त कर दिया ।१०४।

**घोर युद्धमभूत्तयोरपि द्वयोर्दशधा नृपो मूर्छितः**
**सत्यक्तोऽतिथिकारणान्मुनिवरैः धृष्टः पुनश्चोत्थितः ।**

**दत्तात्रेय मुनेरमोघ प्रबलां शक्तिं नृपः प्राहरत्**
**विष्णोःसा किल शक्तिरस्य हृदयं विद्ध्वा ययौ तत्पदम्।१०५**

भावार्थः—अत्यन्त घोर युद्ध दोनों चलता रहा दशबार राजा मूर्छित हुआ दशवार ही उसने उसे होश में लाकर कहा राजन् घर जाकर आराम करो किन्तु ग्यारहवीं वार वह धृष्ट राजा मूर्छा से उठा और दत्तात्रेय की दी हुई अमोघ वैष्णव शक्ति का प्रहार किया वही विष्णु की शक्ति मुनीश्वर के हृदय को वींधकर पुनः भगवान् विष्णु के लोक को चली गयी ।१०५।

**हा तातेति जगाद सापि कपिला गोलोक यात्रां व्यधात्**
**कृष्णं साकथयत्समग्रघटितं वृत्तांस्वगोलोकगा ।**
**गोलोकेऽध्वर ब्रह्मणे भगवता कृष्णेन दत्ता क्रतौ**
**दत्ता सा भृगवे पुरा च विधिना पुत्राय चादाद्भृगुः ।१०६।**

भावार्थः—हा तात ! हा तात ! उस कपिला ने शोकाकुल होकर कहा फिर गोलोक में जाकर भगवान् श्रीकृष्ण जी को जितना वृत्तान्त था समग्र आद्योपान्त कह सुनाया । गोलोक श्रीकृष्ण जी ने कपिला ब्रह्मा को दी ब्रह्मा ने भृगु को दी और भृगु ने पुष्कर क्षेत्र में जमदग्नि नामक अपने प्रपौत्र को दी । वही कपिला आपके पास शरणागत हो गयी है ।१०६

विशेष—इधर रेणुका पति को देखकर: विलाप करने लगी । एवं परशुराम जी को पुकारने लगी योगी परशुराम जी

मानसगति से तत्क्षण माता के पास आपहुंचे। उन्होंने माता को प्रणाम किया। पिता की अन्त्येष्टि के लिये तैयार हो गया। सारी बातें सुनकर माता के युद्ध न करने का अनुरोध करने पर भी भार्गव परशुराम ने २१ बार निःक्षत्र पृथ्वी की प्रतिज्ञा करली। राजा कार्तिवीर्यार्जुन के वध करने का प्रण कर लिया फिर विलाप करती हुई मां को समझाया कि आततायी को मारने का कोई दोष नहीं। इसी बीच में भृगु जी भी—आपहुंचे। भृगु जी ने भी मातापुत्र दोनों को शास्त्रोक्त विधि से उनके संस्कार सहित अन्त्येष्टि कृत्य की व्याख्या की। माताको उसी के साथ सती होने की विधि बताई। उक्त विधि के पश्चात् भृगुजी की आज्ञासे परशुराम जी ब्रह्मलोक में गये। ब्रह्माजी ने उसे गले से लगा कर कहा कि आपकी प्रतिज्ञा दुष्कर है। आप सीधे शंकर जी के चरणों में शरणागत हो जाईये। फिर परशुराम जी ब्रह्मा की आज्ञा से शिवलोक में जा पहुंचे वहां शिवजी के दर्शन कर उनकी स्तुतिकी।

भृगुणादिष्टा रेणुकास्वपतिमामह चितायां सुष्वाप—

**कान्तं वक्षसि सन्निधाय परशोर्माता स्मरन्ती हरिं**
**सा सुष्वाप सुगन्धितेन्धनमये सिद्धे चितामण्डपे।**
**रामः सप्तसहोदरैरपि पितुःशिष्यैश्च वह्निं ददौ**
**रामोच्चारणतत्परा मुनिहिता सद्योऽभवद्भस्मसात्॥१०७**

भावार्थः—अपने पतिदेव को वक्षःस्थलपर रखकर परशुराम जी

रेणुका जमदग्न्योर्वैकुंठयात्रा:—

**रामोच्चारण कारणाद्धरिचराश्चाजग्मुरग्निप्रभाः ।**
**श्यामाश्चारुचतुर्भुजा सुरथगाः कौशेयपीतांशुकाः ।**
**शङ्खाद्यायुधधारिणः समुकुटाः कृत्वा रथे रेणुकां**
**सत्पत्या जमदग्निना हरिचराः प्राप्ताहरेः सन्निधौ ।१०८**

भावार्थ:—रामोच्चारण के कारण बैकुण्ठधाम से समानश्यामवर्ण, चतुर्भुज सुन्दर रथ पर पीले रेशम के सुन्दर वस्त्र धारण किए मुकुट कुण्डल से विभूषित भगवान् के अनुचर आगये। उन्होंने पति सहित रेणुका को रथ में बैठाकर भगवान् के समीप ले गये १०८।

अन्त्येष्टि समाप्य परशुरामस्य भृगोरादेशाद्ब्रह्मलोक गमनम्:—

**एवं शेषविधिं समाप्य भृगुणादिष्टोऽखिलान् ब्राह्मणान्**
**सन्तर्प्यार्थि ददौ गृहे बहुधनं गावश्च सिंहासनम् ।**
**प्राप्तो ब्रह्मपुरीं स्वयं स परशुः कृष्णैकध्यानान्वितं**
**ब्रह्माणं प्रणिनाय वृत्तमखिलं भक्त्याऽवदन्नभ्यधात् ।१०९**

भावार्थ:—इस प्रकार शेष कृत्य को समाप्त कर भृगु के आदेश से ब्राह्मणों का तर्पण करके उनको अपने आश्रम में बहुत सा धन, गौएं, एवं रत्नसिंहासन दान किया फिर स्वयं परशुराम जी ब्रह्मलोक में जा पहुंचे गोलोक धामवासी भगवान् कृष्ण जी के चरणों में ध्यानमग्न ब्रह्मा जी को

प्रणाम करके भक्तिभाव से रोदन करते हुए समस्त वृत्तान्त कह दिया ।१०१।

परशुरामस्य ब्रह्मणः पुरस्तात् स्वात्मवृत्त कथनम्:—

**श्रीब्रह्मञ्जमदग्निजोऽष्टमसुतो रामोऽस्मि ते वंशभू-**
**र्भृग्वाऽऽदेशवशात्पितामहमिहायातः प्रपन्नोऽस्म्यहम् ।**
**राजा हैहयवंशजोऽस्मत्पितुश्चाखेट व्याजातिथि-**
**र्मत्पित्रा कपिलाऽऽप्त वस्तुभिरसौ सेनान्वितो भोजितः ।११०**

भावार्थः—परशुराम जी ने कहा—हे ब्रह्मन् ! आपके वंश में उत्पन्न मैं जमदग्नि का अष्टम पुत्र हूं आपके पुत्र भृगु जी के आदेश से हे पितामह ! इस ब्रह्मलोक में आपके चरणों में शरणागत हुआ हूं। हैहय वंशोत्पन्न राजा कार्तवीर्यार्जुन एक बार मृगया (आखेट) व्याज से हमारे पिता जमदग्नि के पास अतिथि रूप से सेना सहित भूख प्यास से व्याकुल हुए निकले। मेरे पिता (जमदग्नि) जी ने कपिला के प्रताप से प्राप्त दिव्य पदार्थों द्वारा सेना सहित राजा को यथेष्ट सत्कार पूर्वक प्रसन्नचित्त हो भोजन कराया ।११०।

**राजासौ सुरभेर्हिलोभवशगो जघ्नेऽथ तातं मम**
**इत्युक्त्वा परशूरुदन्भृशमहो बाष्पं निरुध्यावदत् ।**
**ब्रह्माण करुणानिधिं पुनरसौ पित्रोर्विहीनोऽभवं**
**जातोऽद्याहमनाथतां हि भगवन् ! माता पिता त्वं गुरु ।१११**

भावार्थ —उस हैहयराज कार्तवीर्यार्जुन ने कामधेनु के लोभ के कारण मेरे पिता जमदग्नि जी को मार दिया। यह कह कर उच्चैःस्वर से रोते हुए आंसुओं के प्रवाह को रोककर आरम्भ कर पुन करुणा के निधान ब्रह्मा जी से कहा कि मैं माता पिता के विना अनाथता को प्राप्त हो गया हूं अतः अब मेरे माता पिता एवं गुरु आप ही हैं ।११।

भार्गवस्य ब्रह्मणे स्वप्रतिज्ञा प्रतिपादनम् —

**आयातो विधिमन्दिरेऽत्र भगवन् मातुर्भृगोश्चाज्ञया**
**राजानं कृतवीर्यनन्दनवरं हत्वा प्रतिज्ञा मम ।**
**निर्भूपां पृथिवीं विधाय सकलां त्रिःसप्तकृत्वो मृधे ।**
**भूपानां क्षतजेन वै पितृगणं स्वं तर्पयिष्याम्यहम् ।११२।**

भावार्थः—भगवन् ! माता श्री रेणुका एव पितामह भृगुदेव जी की आज्ञा को शिरोधार्य कर इस ब्रह्मलोक में आपके पूज्यचरणों में शरणापन्न हुआ हूं। मेरी प्रतिज्ञा है कि कार्तवीर्यार्जुन सहस्रबाहु राजा को मार कर समस्त पृथ्वी को २१ वार निःक्षत्र करके राजाओं के रुधिर द्वारा अपने पितरों का तर्पण करूं ।११२।

ब्रह्मणः परशुरामं हृदयेन स्वज्याक्रोडे कृत्वा सान्त्वनम्ः—

**कृत्वा वक्षसि भार्गवं प्रियतमं दत्वा शुभंस्वाशिषं**
**श्रुत्वा जीवविघातिनीं स चकितो घोरां प्रतिज्ञां वटोः ।**
**एक क्षत्रियदोषतोऽत्र सकलां जातिं विनाशात्मिकां**
**सृष्टा सृष्टिरियं मया बहुविधैः क्लेशैः प्रभोराज्ञया ।११३**

भावार्थः—प्रियतम भार्गव को हृदय से लगा कर अपनी शुभाशीर्वाद देकर उस वटु **परशुराम** की एक क्षत्रिय राजा के दोष से समस्त जाति की विनाश शालिनी अनन्तजीव घातिनी घोर प्रतिज्ञा सुनकर ब्रह्मदेव अत्यन्त चकित होकर कहने लगे हे बटो ! प्रभु की आज्ञा से अनन्त क्लेशों को सहन करते हुए मैंने इस सृष्टि की रचना की है ।११३।

**ब्रह्मक्षत्रियवैश्यशूद्र रचना नित्या चतुर्धा प्रिय**
**साविर्भूय तिरोऽभवदितिक्रमो लोके हरेराज्ञया ।**
**शक्यं सर्वमपीह सेश्वर कृपा साध्या प्रतिज्ञापि ते**
**गच्छत्वं शिवलोकमव्यय परं शम्भुं प्रपन्नो भव ।११४।**

भावार्थः— ब्राह्मण, क्षत्रिय, वैश्य, शूद्र यह चार प्रकार की सृष्टि नित्य है हे प्रिय ! वह चारों प्रकार की सृष्टि उत्पन्न होकर लोप होकर पुनः पुनः भगवान् की आज्ञा से लोक में यही क्रम चला आरहा है। ईश्वर कृपा से ही तूने प्रतिज्ञा की है उसी की कृपा से प्रतिज्ञा की पूर्ति भी अवश्य साध्य है। सब से अविकारी शिवलोक है तुम वहीं शिवलोक में चले जाओ वहीं भगवान् शंकर की शरणागति ग्रहण करलो तुमारी कार्य सिद्धि होगी ।११४।

**लोके शङ्कर किङ्कराहि बहवः सन्तीह भूपा वटो**
**कैलाशेशविनाज्ञया त्रिभुवने को हन्तुमीशोऽस्ति तान् ।**
**शक्तित्र्यम्बकयोश्च दिव्यकवचं भक्त्या सदा बिभ्रतः**
**कृष्णस्य जयवीजकं सकवचं श्री शङ्करात्प्राप्नुहि ।११५।**

भावार्थ:—हे बटो ! इस संसार में भगवान् शंकर के अनन्य किङ्कर (भक्त) बहुत से राजालोक हैं एवं शिवशक्ति दोनों के कवचों को धारण करने वाले भी बहुत से राजालोग हैं कैलाशपति भगवान् शङ्कर जी की आज्ञा के विना उन शंकर प्रिय राजाओं को इस लोक में कौन मार सकता है ? भगवान् श्री कृष्ण का कवच जयबीज से युक्त समन्त्रक भगवान् श्री शंकर जी से प्राप्त करलो ।११५।

ब्रह्मण: सन्मार्ग प्रदर्शनम्:—

**तेजो वैष्णवमत्रदुर्लभतमं शैवञ्चशाक्तं जयेत्**
**त्रैलोक्ये शिव एव ते गुरुरसौ प्राक्पश्च जन्मस्वपि ।**
**मन्त्र स्त्री पति देव दीक्षगुरवो लभ्या निषेकाद् ध्रुवं**
**ये येषां खलु तेषु ते स्वयममी पञ्चैव स्युः साक्षतः ।११६**

भावार्थ:—इस संसार में वैष्णव तेज अतिदुलभ है जो शैव एवं शाक्ततेज को जीत लेता है । त्रैलोक्य में तेरे. लिये पूर्व पश्चात् सभी जन्मजन्मान्तरों में होने वाले एकमात्र गुरु वही देवाधिदेव महादेव भगवान् शङ्कर ही हैं । मन्त्र, कान्ता, कान्त, देव एवं दीक्षागुरु ये पांचों दैवेच्छा (प्रारब्ध) वश अवश्य उपलब्ध हो जाते हैं । जो जिनके साथ सम्बन्ध रखते हों वे उन में पांचों ही आकर कर्म, भाग्य, काल के अनुसार स्वयं साक्षात् प्रत्यक्ष हो जाते हैं ।११६।

ब्रह्मण: पुन: परशुरामाय सन्मार्ग प्रदर्शनम्:—

**त्रैलोक्ये विजय हि नाम कवचं यच्छङ्करात्प्राप्स्यसि**
**निर्भूपां पृथिवीं करिष्यसि बटो त्रिःसप्तकृत्वो ध्रुवम् ।**

दिव्यं पाशुपतं भवेऽस्त्रमतुलं दाता शिवो दास्यति
मन्त्रेणाद्भुतसम्बलेन बलवच्छत्रु व्रजं जेष्यसि ।११७।

भावार्थ::—त्रैलोक्य विजय नामक कवच जो शंकर से प्राप्त करोगे। हे वत्स ! आप अवश्य २१ वार पृथिवी को राजाओं से रहित कर लोगे। एक दिव्य पाशुपत नामका अस्त्र विश्व में अतुलनीय है जो स्वयं दाता भगवान् शंकर जी आपको देंगे। अद्भुत मन्त्र के सहारे आप बलशाली शत्रुओं के समूह को अवश्य जीत लोगे ।११७।

शिवलोक वर्णनम् —

वाय्वाऽऽधारधृतैक लक्षमितयोच्छ्रित्यास्थितो योजनै-
र्लोकोऽयं शिवभूर्विलक्षणविधेर्लोकादवर्ण्यः स्वतः ।
वैकुण्ठं दिशि दक्षिणे गणगुहैर्गौर्याश्च लोकोऽपरो
यस्याधो ध्रुवलोक ईरितपरस्तेभ्योऽपि सर्वोर्ध्वगः ।११८।

भावार्थ:—वायु के आधार पर प्रतिष्ठित वह लोकोत्तर लोक एक लाख योजन ऊंचा एवं ब्रह्मलोक से विलक्षण अनिर्वचनीय शिवलोक है। उसके दक्षिण की ओर वैकुण्ठधाम (लोक) है उसी के अपर (वामवर्ती) गणेश एवं गुहगणों के साथ गौरीलोक विराजमान है जिसके नीचे ध्रुवलोक जिस से परे कोई लोक नहीं फिर इन सब के ऊपर ।११८।

पञ्चाशन्मि ।कोटियोजनमितो गोलोकधामोऽद्भुतो
कल्पद्रुव्रजवेष्टितैरुपवनैः सत्कामदोग्ध्रीगणैः ।

**योगीशैः कृतकोटिकल्पजतपः पूतैः सदा सेवितं**
**योगीन्द्रः शिवलोकमैक्षत मनोयायी स्वयं भार्गवः ।११९।**

भावार्थः—पचास करोड योजन ऊंचा एवं विस्तृत अत्यद्भुत श्री गोलोक धाम विराजित है रामपरक परम वैष्णव सम्प्रदाय की धारणा है कि इसी राधाकृष्ण के परम गोलोक धाम से उत्तर की ओर साकेतधाम विद्यमान है जिस में अनन्त कल्प तक श्री राधाकृष्ण युगल की तरह ही श्री साकेतधाम में भी कल्पवृक्ष के तले अनन्त कल्प तक नित्य श्री सीताराम भगवान् वानरगणो के साथ हनुमान् भक्त-राज की सेवा में विराजमान रहते हैं। परशुराम जी ब्रह्मा की आज्ञा से शिवलोक देखने जा रहे हैं आनुषंगिक रूप से इन उत्तम लोगों की प्रतीति भी भगवान् ब्रह्मा के आशीर्वाद से हुई कल्पद्रुमवृन्द से घिरे उपवनों से युक्त सत्वगुण प्रधान कामनाओं की पूरक कामधेनु गौओं के समूह से युक्त जिन महात्माओं ने करोड़ों कल्पों तक तप करके अपने आत्माओं को पवित्र कर लिया है ऐसे योगीश्वरों से सेवित शिवधाम को मन के समान वेगशाली भगवान् परशुराम जी ने पहुंचकर शिवलोक का विहङ्गम दृष्टि से दर्शन किया ।११९।

**फुल्लेन्दीवरमण्डितैः ससलिलैः कासारगैः सारसै—**
**रम्यैर्मार्गशतैर्ध्वजैरुभमतश्चाट्टालिकाभिर्वृतम् ।**

द्वारैः षोडशभिश्च रत्नजटितैः भित्तैः सकार्तस्वरैः
सौधान्तः शतमन्दिरैर्विलसितं शम्भोः प्रदीप्तालयम् ।१२०

भावार्थः—सुन्दर जलों से युक्त, खिले हुए कमलों से विभूषित, हंसों की चहल पहल से सजे हुए सरोवरों से युक्त रमणीक सैंकडों ध्वजा पताका सहित अट्टारियों से सजे हुए सैंकडों मार्गों द्वारा वेष्टित, रत्नों से जड़े हुए स्वर्णमय किवाड़ों से सुशोभित १६ द्वारों के साथ ही सौध (प्रासाद) के आभ्यन्तरवर्ती सैंकडों चमकते हुए मन्दिरों से चमचमाते (जगमगाते)भगवान् साम्बसदाशिव के भवन को देखा ।१२०

सिंहद्वारमतीवचित्ररचितं सौवर्णभित्तान्वितं
बाह्याभ्यन्तरतोऽमलैर्मरकतै रत्नैश्च सन्दीपितम् ।
तद्द्वारेऽथ ददर्श कालसदृशौ द्वौ द्वारपालौदृढौ
दृष्ट्वोवाचभिया सदाशिव विभोः पातं प्रपन्नं हि माम् ।१२१

भावार्थः—शिव भवन का सिंहद्वार अत्यन्त सुन्दर चित्रों से रचित, सुवर्ण किवाडों से युक्त, बाहिर अन्दर दोनों ओर से शुद्ध मरकत मणियों से चमकते हुए उसद्वार पर काल महाकाल के समान, दो पुष्ट द्वारपालों को परशुराम जी ने देखा। देख कर डरते हुए परशुराम जी बोले—मैं सदाशिव भगवान् के चरण शरण में आया हुं मेरी आप दोनों रक्षा करें ।१२१

श्रुत्वा विप्रवचः कृपापरवशौ शम्भोः प्रवेष्टुं गृहं
तावाज्ञां ददतुस्ततः स परशुः स्मृत्वा हरिं प्राविशत् ।

द्वारान् षोडशपारयंश्च भवने संस्तूयमानं सुरैः
पुष्पैर्वासित पारिजातकतरोः व्याघ्राम्बरावेष्टितम् १२२

भावार्थः—ब्राह्मण के वचन को सुनकर उन दोनों द्वारपालों ने भगवान् के भवन में प्रवेश की आज्ञा दे दी। उसके पश्चात् परशुराम जी ने भगवान् का स्मरण करके सोलह द्वारों को पार करते हुए पारिजात के पुष्पों की सुगन्धि से व्याप्त व्याघ्र के चर्म के वस्त्र से शरीर को लपेटे हुए, १२२।

चन्द्रार्धकृतशेखरं सुवरदं नागोपवीतान्वितं
भक्तानुग्रह कातरं त्रिनयनं श्री शूलपाणिं प्रभुम्।
श्रीशम्भुँ सपरिच्छदं सकरुणं गौर्यान्वितं वामतः
मूर्ध्ना वै प्रणिनाय सादरमसौ गौरीश्वरं ददृशे ।१२३

भावार्थः—भाल (मस्तक) पर अर्धचन्द्र धारण करने वाले, सुन्दर वरप्रद, शेषनाग का यज्ञोपवीत पहिने हुए। भक्तों पर अनुग्रह करने में कुशल. त्रिनेत्र धारी. हाथों में त्रिशूलधारी सर्वसमर्थ, सपरिवार बाम भाग में पार्वती से युक्त, गौरीशंकर भगवान् को परशुराम जी ने सिर झुकाकर सादर प्रणाम करके दर्शन किये ।१२३।

परशुराम कृत शिवस्तुतिः—

कृष्णध्यानपरं जरामृतिहरं मृत्युञ्जयं त्र्यम्बकं
गौर्यानन्दमयं गणेशगुहयोर्मध्यस्थमानन्ददम्।
पूर्णब्रह्ममयं सदा भयहरं नन्दीश्वराद्यैर्वृतं
ब्रह्मा विष्णु शिवत्रयं प्रणवगं ज्योतिः स्वरूपं भजे ।१२४

भावार्थः—सच्चिदानन्दकन्द भगवान् श्री कृष्णजी के ध्यान में लीन, जरा (बुढापा), मृति (मृत्यु) दोनों के हरण करने वाले, मृत्यु को जीतने में समर्थ भूर्भुवः स्वः तीनों लोकों के नियामक, दक्षिण की ओर श्रीगणेश एवं वाम भाग की ओर श्री कार्तिक जी विराजमान हैं। उन दोनों के मध्य में गौरीशंकर जी साक्षात् आनन्दमय हो सबको आनन्द देने वाले हैं, पूर्णब्रह्म स्वरूप, सदा भय को हरण करने में समर्थ; नन्दीश्वरादि गणों के द्वारा सेवित, ब्रह्मा, विष्णु, शंकर तीनों एक होकर प्रणव (ॐ) कार से उत्पन्न ज्योति स्वरूप साम्बसदाशिव की सेवा में अपने आपको समर्पित करता हूं।

## अथ परशुराम कृत स्तुतिः

### परशुराम उवाच

ईश त्वां स्तोतुमिच्छामि सर्वथा स्तोतुमक्षमम्।
अक्षराक्षरबीजं च किं वा स्तौमि निरीहकम्।

न योजनां कर्तुमीशो देवेशं स्तौमि मूढधीः।
वेदा न शक्ता यं स्तोतुं कस्त्वां स्तोतुमिहेश्वरः।।

बुद्धेर्वाङ्मनसोः पारं सारात्सारं परात्परम्।
ज्ञानबुद्धेरसाध्यं च सिद्धं सिद्धैर्निषेवितम्।।

यमाकाशमिवाद्यन्तमध्यहीनं तथाव्ययम्।
विश्वतन्त्रमतन्त्रं च स्वतन्त्रं तन्त्रबीजकम्।।

ध्यानासाध्यं दुराराध्यमतिसाध्यं कृपानिधिम् ।
त्राहि मां करुणासिन्धो दीनबन्धोऽतिदीनकम् ॥

अद्य मे सफलं जन्म जीवितं च सुजीवितम् ।
स्वप्नादृष्टं च भक्तानां पश्यामि चक्षुषाधुना ॥

शक्रादयः सुरगणाः कलया यस्य सम्भवाः ।
चराचराः कलांशेन तं नमामि महेश्वरम् ॥

यं भास्करस्वरूपं च शशिरूपं हुताशनम् ।
जलरूपं वायुरूपं तं नमामि महेश्वरम् ॥

स्त्रीरूपं क्लीबरूपं च पुँरूपं च बिभर्ति यः ।
सर्वाधारं सर्वरूपं तं नमामि महेश्वरम् ॥

देव्या कठोरतपसा यो लब्धो गिरिकन्यया ।
दुर्लभस्तपसां यो हि तं नमामि महेश्वरम् ॥

सर्वेषां कल्पवृक्षं च वाञ्छाधिकफलप्रदम् ।
आशुतोषं भक्तबन्धुं तं नमामि महेश्वरम् ॥

अनन्तविश्वसृष्टीनां संहर्तारं भयंकरम् ।
क्षणेन लीलामात्रेण तं नमामि महेश्वरम् ॥

यः कालः कालकालश्च कालबीजं च कालजः ।
अजः प्रजश्च यः सर्वस्तं नमामि महेश्वरम् ॥

इत्येवमुक्त्वा स भृगुः पपात चरणाम्बुजे ।
आशिषं च ददौ तस्मै सुप्रसन्नो बभूव सः ॥
जामदग्न्यकृतं स्तोत्रं यः पठेद् भक्तिसयुतः ।
सर्वपापविनिर्मुक्तः शिवलोकं स गच्छति ॥

ब्रह्मवैवर्तपुराणे (गणपतिखण्डे २९।४३—५७)

परशुरामः शिवंस्तुत्वा चरणकमले निपत्य शिवाशिषं गृह्णाति
ततः शिवस्य प्रश्नाः

स्तुत्वासौ पदपंकजे निपतितः शम्भोर्गृहीत्वाऽऽशिषं—
स्वाकर्ण्यस्तुति पाटवं स भगवान् पप्रच्छ रामं स्वयम् ।
कस्त्वं ? कस्य सुतः ? क्व वसतिः ? स्तोत्रं कथं चर्चितं ?
किं वा ते वद वाञ्छितं ? हृदि वटो ! किन्ते करिष्याम्यहम् ?

भावार्थः—इतनी स्तुति करके परशुराम ने साम्बसदाशिव भगवान् के चरण कमलों में गिर कर भगवान् शंकर जी से आशीर्वाद ग्रहण कर लिये। अच्छी तरह से स्तुति चातुर्य की ओर ध्यान देते हुए भगवान् शंकर जी ने पूच्छा हे वटो ? तुम कौन हो ? किस के पुत्र हो ? कहां रहते हो ? इतनी स्तुति क्यों की है ? तुमारे हृदय में मनोरथ क्या है ? मैं तुमारा कौन सा कार्य सिद्ध कर सकूंगा ? ।१२५।

परशुराम परिचयः—

रामोऽहं जमदग्निजोऽष्टमसुतो वंशे भृगोः सम्भव—
श्चेक्ष्वाकोः कुलजा प्रसेन दुहिता मातास्ति मे रेणुका ।

**दैवाद्धैहयवंशजोऽर्जुननृपो जातोऽतिथिर्मत्पितुः**
**मत्पित्रा कपिलाऽऽप्तवस्तुभिरसौ राजोचितैर्भोजितः।१२६**

भावार्थः—भगवान् शंकर जी के प्रश्नों को सुनकर परशुराम बोले— हे भगवन् ! भृगु वंशोत्पन्न महर्षि जमदग्नि के अष्टम गर्भ से उत्पन्न हूं; मेरा नाम राम है; इक्ष्वाकुवंशीय प्रसेनजित् (रेणुक) राजा की पुत्री रेणुका (कामली) मेरी सतीसाध्वी माता जी ने मुझे जन्म दिया है। दैववश हैहय वंशीय कार्तवीर्यार्जुन महाराज मन्त्री उपमन्त्री सेना सहित सूर्यास्त के बाद मेरे पिता जमदग्नि के अतिथिरूप में पधारे कामधेनु की कृपा से राजा के साथियों सहित राजोचित सत्कार पूर्वक भोजन से तृप्त किया।२६।

परशुरामस्य समस्याः—

**राजासौ कपिलाप्तिलोभवशतो जघ्नेऽथ तातं मम**
**दृष्ट्वा तं मृतमाशु सा च सुरभिर्गोलोकमूर्ध्वं ययौ।**
**माता मेऽनुजगाम पितृपदवीं जातोऽस्म्यनाथः प्रभो !**
**त्वं मे ह्यद्य पिता शिवा च जननी पातं हि मां पुत्रवत्।१२७**

भावार्थः—उस राजा ने कपिला की प्राप्ति के लोभ में मेरे पिताजी का वध कर दिया कपिला माता मेरे पिता को मृतावस्था में देखकर गोलोकधाम में चली गयी। (मेरी माता जी उनके साथ ही सती हो गयी और मैं अनाथ हो गया हूं। आज मेरे पिता आप ही हैं और मेरी माता के रूपमें त्रैलोक्य

नायिका स्वयं पार्वती जी हैं अब आप दोनों ही मेरा पुत्रवत् पालन करें (मेरी रक्षा करें) ।१२७।

परशुरामस्य घोरप्रतिज्ञा:—

**शोके नाति सुदुष्करा हि भगवन् ! घोरा प्रतिज्ञा कृता**
**हत्वा हैहयवंशजार्जुननृपं प्राप्तं महासंयुगे ।**
**निर्भूपामचलां विधाय सकलां त्रिःसप्तकृत्वो युधि**
**राज्ञां वै रुधिरेण स्वं पितृगणं सन्तर्पयिष्याम्यहम् ।१२८**

भावार्थ:—शोक से व्याकुल होकर हे भगवन् ! मैंने घोर एवं सुदुष्कर प्रतिज्ञा की है; कि हैहय वंशीय कार्तवीर्यार्जुन सहस्रबाहु को युद्ध में मार कर २१ बार निःक्षत्र पृथ्वी करके सभी राजाओं के रुधिर से पितृ तर्पण करूं ।१२८।

प्रतिज्ञां श्रुत्वा श्रीगौरीशङ्करयोराश्चर्य वर्णनम् —

**श्रुत्वैतद्भगवानुदैक्षत शिवा वक्त्रं सनम्राननः**
**सा शुष्काधरतालुका भगवती प्रोवाच विप्रं वचः ।**
**निर्भूपां पृथिवीं चिकीर्षसि वटो ! त्रिःसप्तकृत्वः क्रुधा**
**निःशस्त्रोऽपि सहस्रबाहुहननं भ्रूभङ्गभूलीलया ।१२९।**

भावार्थ:—इतनी घोर प्रतिज्ञा को सुनकर भगवान् शंकर जी ने आंख उठा कर पार्वती जी के मुखारबिन्द की ओर देख कर अपने मुखारविन्द को झुका लिया । उधर माता पार्वती जी का सुनते ही ओठ और तालु सूख गये । फिर भार्गव राम

को भगवती पार्वती कहने लगी—हे वटो ! क्रोध से २१ बार राजाओं से रहित (निःक्षत्र) पृथिवी करना चाहते हो। निःशस्त्र होते हुए भी सहस्रबाहु राजा को भ्रूभङ्ग लीला से मार दोगे ।१२९।

जगदम्बायाः भार्गव समुद बोधनम्:—

**प्रत्तं दत्तमहात्मना सुकवचं तस्मै पुरा श्रीहरेः**
**तच्छक्तिः प्रवृढा यया तव पिता युद्धे वटो ! हिंसितः ।**
**विष्णोर्ध्यानपरायणोऽनिशमसौ मन्त्रस्तवान्ध्यायते**
**तं हन्तुं प्रभुरस्ति को? ऽपरनृपा भक्ता हि मे का च भीः? १३०**

भावार्थ—हे वटो ! उस सहस्रबाहु राजा को दत्तात्रेय भगवान् जी ने स्वयं प्राचीन समय में भगवान् विष्णु का अमोघ कवच दिया था। उसकी इतनी प्रबल शक्ति है कि जिस से तुमारे पिता जी को उसने युद्ध में समाप्त कर दिया। विष्णु भगवान् का वह दिनरात ध्यान करता हुआ उनके मन्त्र और स्तुतियों द्वारा उनकी पूजाऽऽराधन करता रहता है। उसको इस जगत् में मारने की कौन शक्ति रखता है ? शेष राजा लोक तो मेरे प्यारे भक्त हैं ही उन को कौन सी भीति हो सकती है ।१३०।

श्रीभद्रकाल्या: भार्गव समुद्बोधनम्:—

**रे रे विप्र ! कथं चिकीर्षसि जगन्निर्भूपमेकोऽपि सन् ?**
**नानायज्ञकृतः पराक्रमभृतः पुण्यात्मनो भूभृतः ।**

**भक्तान् पामर ! नो जिघांससि मृधे प्रोवाच काली वटुं**
**श्रुत्वोच्चैः स रुरोद शोकविकलः प्राणांश्च त्यक्तुं मनाः ।३१**

भावार्थः—परशुराम को माता भद्रकाली समझाती है। रे रे ब्रह्मवटो ! तू अकेला होता हुआ भी किस लिये जगत् का निर्भूप (निःक्षत्र) करना चाहता है ? अनेक प्रकार के यज्ञ करने वाले, बड़े भारी पराक्रमी, पुण्यात्मा, राजाओं को जो हमारे परमभक्त हैं। हे पामर (गंवार) उनको युद्ध में मारने की इच्छा करते हो ! इस प्रकार माता भद्रकाली और माता पार्वती के वचन सुनकर परशुराम जी ने शोक से व्याकुल होकर ऊंचे से ऊंचा रोना प्रारम्भ कर दिया एवं प्राणत्यागने पर उतारू हो गये । ३१।

रुदन्तं रामं प्रति आशुतोष भगवतः सान्त्वनम्:—

**श्रुत्वा रोदनमाशुतोषभगवान् पश्यञ्छिवां कालिकां**
**कृत्वासौ विनयं तयोरनुमतिं सम्प्राप्य भक्तप्रियः ।**
**सद्यस्तं जमदग्निनन्दनमहो वक्तुं प्रभुः प्रारभद्**
**अद्यारभ्य शिशो ! स्वतस्त्वमसि भो सत्पुत्रवन्नो महान् ।**

भावार्थः—परशुराम के रोदन को सुनकर आशुतोष भगवान् करुणा शंकर जी ने माता पार्वती और माता भद्रकाली की ओर देखा अत्यन्त अनुनय विनय द्वारा उन दोनों की अनुमति लेकर भक्तवत्सल भगवान् शंकर जी ने जमदग्निनन्दन परशुराम जी को तत्क्षण आश्चर्यान्वित होकर कहाकि हे शिशो ? आज से लेकर वेटा ! तू हमारा सही औरस पुत्र

की तरह महान् हो क्योंकि तू हमारे पास अनन्त विद्या प्राप्त कर अनूचान बनोगे वेदों में लिखा है कि "योऽनूचानः स नो महान्" ।१३२।

शिवस्य सर्वस्वदानानुग्रहः—

**दास्ये तुभ्यमहं सुदुर्लभमनुं गुह्यं त्रिधामस्वपि चेत्थंभूतमिवादभुतं हि कवचं दातास्मि ते भार्गव । येन त्वं हि सहस्रबाहु हनने शक्तः प्रसादान्मम निर्भूपां सकलां करिष्यसिमहीं त्रिःसप्तकृत्वो युधि ।१३३**

भावार्थः—शंकर जी कहते हैं—हे भार्गव ! मैं तुमें तीन लोकों में दुर्लभ एवं गुप्त मन्त्र देता हूं एवं उसी के साथ इस प्रकार का अद्भुत कवच भी तुझे दे रहा हूं। जिसके द्वारा तू लीला मात्र से मेरे प्रसाद के प्रताप से सहस्रबाहु राजा को मारने में सर्वसमर्थ हो जाओगे एवं २१ बार पृथ्वी को युद्ध में निःक्षत्र करने में समर्थ हो जाओगे ।१३३।

**वैशिष्टचम्**:—इतना कहकर भगवान् शंकर जी ने अत्यद्भुत मन्त्र सहित त्रैलोक्य विजय कवच, स्तोत्र, पूजाविधान सहित पुरश्चरण विधि यथा नियम सिखाई। सिद्धि के लिये स्थान, समय एवं संख्या का महत्व, वेद, वेदाङ्ग समग्र तत्क्षण पढ़ा दिये। इसी प्रकार नागपाश, पाशुपत, ब्रह्मास्त्र आग्नेयास्त्र, नारायणास्त्र, वायव्यास्त्र वारुणास्त्र गान्धर्व, गारुड, जृम्भणास्त्र, गदा, शक्ति, परशु अमोघ, शूल इसी के साथ अनेक प्रकार के शस्त्र, अस्त्र, मन्त्र विधिपूर्वक

अक्षय धनुष पर शस्त्रास्त्रों के संहार और क्षिप्रेप तक समझा दिये, आत्मरक्षण, सन्धान, संग्राम विजयका क्रम, मायायुद्ध. बहुविध हुंकारो का मन्त्रविधान सहित बताया। अपनी सेना की रक्षा, शत्रु सेना का नाश रणसंकट के विविधोपाय, संहारविद्या, मोहिनीविद्या, जन्म, मृत्यु, बुढापे को दूर करने के उपाय। इत्यादि अनन्तविद्याओं को प्राप्त करते बहुत देर तक गुरुकुल में ही रह कर और तीर्थ तट पर मन्त्र सिद्धि करके साम्बसदाशिव को प्रणाम कर परशुराम जी वापिस आश्रम पर लौट आये।

## अथ त्रैलोक्य विजय कृष्णकवचम्

### महादेव उवाच

वत्सागच्छ महाभाग भृगुवंशसमुद्भव ।
पुत्राधिकोऽसि प्रेम्णा मे कवचं ग्रहणं कुरु ।१।

शृणु राम प्रवक्ष्यामि ब्रह्माण्डे परमाद्भुतम् ।
त्रैलोक्यविजयं नाम श्रीकृष्णस्य जयावहम् ।२।

श्रीकृष्णेन पुरा दत्तं गोलोके राधिकाश्रये ।
रासमण्डलमध्ये च मह्यं वृन्दावने वने ।३।

अतिगुह्यतरं तत्त्वं सर्वमन्त्रौघविग्रहम् ।
पुण्यात् पुण्यतरं चैव परं स्नेहाद् वदामि ते ।४।

यद् धृत्वा पठनाद् देवी मूलप्रकृतिरीश्वरी ।
शुम्भं निशुम्भं महिषं रक्तबीजं जघान ह ।५।

यद् धृत्वाहं च जगतां संहर्ता सर्वतत्त्ववित् ।
अबध्यं त्रिपुरं पूर्वं दुरन्तमवलीलया ।६।

यद् धृत्वा पठनाद् ब्रह्मा ससृजे सृष्टिमुत्तमाम् ।
यद् धृत्वा भगवान् शेषो विधत्ते विश्वमेव च ।७।

यद् धृत्वा कूर्मराजश्च शेषं धत्तेऽवलीलया ।
यद् धृत्वा भगवान् वायुर्विश्वाधारो विभुःस्वयम् ।८।

यद् धृत्वा वरुणः सिद्धः कुबेरश्च धनेश्वरः ।
यद् धृत्वा पठनादिन्द्रो देवानामधिपः स्वयम् ।९।

यद् धृत्वा भाति भुवने तेजोराशिः स्वयं रविः ।
यद् धृत्वा पठनाच्चन्द्रो महाबलपराक्रमः ।१०।

अगस्त्यः सागरान् सप्त यद् धृत्वा पठनात् पपौ ।
चकार तेजसा जीर्णं दैत्यं वातापिसंज्ञकम् ।११।

यद् धृत्वा पठनाद् देवी सर्वाधारा वसुन्धरा ।
यद् धृत्वा पठनात् पूजा गङ्गा भुवनपावनी ।१२।

यद् धृत्वा जगतां साक्षी धर्मो धर्मभृतां वरः ।
सर्वविद्याधिदेवी सा यच्च धृत्वा सरस्वती ।१३।

यद् धृत्वा जगतां लक्ष्मीरन्नदात्री परात्परा ।
यद् धृत्वा पठनाद् बेदान् सावित्री प्रसुषाव च ।१४।
वेदाश्च धर्मवक्तारो यद् धृत्वा पठनाद् भृगो ।
यद् धृत्वा पठनाच्छुद्धस्तेजस्वी हव्यवाहनः ।१५।
सनत्कुमारो भगवान् यद् धृत्वा ज्ञानिनां वरः ।
दातव्यं कृष्णभक्ताय साधवे च महात्मने ।१६।
शठाय परशिष्याय दत्वा मृत्युमवाप्नुयात् ।
त्रैलोक्यविजयस्यास्य कवचस्य प्रजापतिः १७।
ऋषिश्छन्दश्च गायत्री देवो रासेश्वरः स्वयम् ।
त्रैलोक्यविजयप्राप्तौ बिनियोगः प्रकीर्तितः ।१८।
परात्परं च कवचं त्रिषु लोकेषु दुर्लभम् ।
प्रणवो मे शिरः पातु श्रीकृष्णाय नमः सदा ।१९।
सदा पायात् कपालं कृष्णाय स्वाहेति पञ्चाक्षरः ।
कृष्णेति पातु नेत्रे च कृष्णस्वाहेति तारकम् ।२०।
हरये नम इत्येवं भ्रूलताँ पातु मे सदा ।
ॐ गोविन्दाय स्वाहेति नासिकां पातु संततम् ।२१।
गोपालाय नमो गण्डौ पातु मे सर्वतः सदा ।
ॐ नमो गोपाङ्गनेशाय कर्णौ पातु सदा मम ।२२।

ॐ कृष्णाय नमः शश्वत् पातु मेऽधरयुग्मकम् ।
ॐ गोविन्दाय स्वाहेति दन्तावलिं मे सदावतु ।२३।
ॐ कृष्णाय दन्तरन्ध्रं दन्तोर्ध्वं क्लीं सदावतु ।
ॐ श्रीकृष्णाय स्वाहेति जिह्विकां पातु मे सदा ।२४।
रासेश्वराय स्वाहेति तालुकं पातु मे सदा ।
राधिकेशाय स्वाहेति कण्ठं पातु सदा मम ।२५।
नमो गोपाङ्गनेशाय वक्षः पातु सदा मम ।
ॐ गोपेशाय स्वाहेति स्कन्धं पातु सदा मम ।२६।
नमः किशोरवेशाय स्वाहा पृष्ठं सदावतु ।
उदरं पातु मे नित्यं मुकुन्दाय नमः सदा ।२७।
ॐ ह्रीं क्लीं कृष्णाय स्वाहेति करौ पादौ सदा मम ।
ॐ विष्णवे नमो बाहुयुग्मं पातु सदा मम ।२८।
ॐ ह्रीं भगवते स्वाहा नखरं पातु मे सदा ।
ॐ नमो नारायणायेति नखरन्ध्रं सदावतु ।२९।
ॐ ह्रीं ह्रीं पद्मनाभाय नाभिं पातु सदा मम ।
ॐ सर्वेशाय स्वाहेति कङ्कालं पातु मे सदा ।३०।
ॐ गोपीरमणाय स्वाहा नितम्बं पातु मे सदा ।
ॐ गोपीरमणनाथाय पादौ पातु सदा मम ।३१।

ॐ ह्रीं श्रीं रसिकेशाय स्वाहा सर्वं सदावतु ।
ॐ केशवाय स्वाहेति मम केशान् सदावतु ।३२।
नमः कृष्णाय स्वाहेति ब्रह्मरन्ध्रं सदावतु ।
ॐ माधवाय स्वाहेति लोमानि मे सदावतु ।३३।

※ ॐ ह्रीं श्रीं रसिकेशाय स्वाहा सर्वं सदावतु ※

परिपूर्णतमः कृष्णः प्राच्यां मां सर्वदावतु ।
स्वयं गोलोकनाथो मामाग्नेय्यां दिशि रक्षतु ।३४।
पूर्णब्रह्मस्वरूपश्च दक्षिणे मां सदावतु ।
नैर्ऋत्यां पातु मां कृष्णः पश्चिमे पातु मां हरिः ।३५।
गोविन्दः पातु मां शश्वद् वायव्यां दिशि नित्यशः ।
उत्तरे मां सदा पातु रसिकानां शिरोमणिः ।३६।
ऐशान्यां मां सदा पातु वृन्दावनविहारकृत् ।
वृन्दावनीप्राणनाथः पातु मामूर्ध्वदेशतः ।३७
सदैव माधवः पातु बलिहारी महाबलः ।
जले स्थले चान्तरिक्षे नृसिंहः पातु मां सदा ।३८।
स्वप्ने जागरणे शश्वत् पातु मां माधवः सदा ।
सर्वान्तरात्मा निर्लिप्तो रक्ष मां सर्वतो विभुः ।३९।

इति ते कथितं वत्स सर्वमन्त्रौघविग्रहम् ।
त्रैलोक्यविजयं नाम कवचं परमाद्भुतम् ४०।

मया श्रुतं कृष्णवक्त्रात् प्रवक्तव्यं न कस्यचित् ।
गुरुमभ्यर्च्य विधिवत् कवचं धारयेत् तु यः ।४१।

कण्ठे वा दक्षिणे बाहौ सोऽपि विष्णुर्न संशयः ।
स च भक्तो वसद् यत्र लक्ष्मीर्वाणी वसेत् ततः ४२।

यदि स्यात सिद्धकवचो जीवन्मुक्तो भवेत्तु सः ।
निश्चितं कोटिवर्षाणाँ पूजायाः फलमाप्नुयात् ।४३।

रायसूयसहस्राणि वाजपेयशतानि च ।
अश्वमेधायुतान्येव नरमेधायुतानि च ।४४।

महादानानि यान्येव प्रादक्षिण्यं भुवस्तथा ।
त्रैलोक्यविजयस्यास्य कलां नार्हन्ति षोडशीम् ।४५।

व्रतोपवासनियमं स्वाध्यायाध्ययनं तपः ।
स्नानं च सर्वतीर्थेषु नास्यार्हन्ति कलामपि ।४६।

सिद्धित्वममरत्वं च दास्यत्वं श्रीहरेरपि ।
यदि स्यात् सिद्धकवचः सर्वं प्राप्नोति निश्चितम् ।४७

स भवेत् सिद्धकवचो दशलक्षं जपेत्तु यः ।
यो भवेत् सिद्धकवचः सर्वज्ञः स भवेद् ध्रुवम् ।४८।

इदं कवचमज्ञात्वा भजेत् कृष्णं सुमन्दधीः ।
कोटिकल्पप्रजप्तोऽपि न मन्त्रः सिद्धिदायकः ।४९।

गृहीत्वा कवचं वत्स महीं निःक्षत्रियां कुरु ।
त्रिःसप्तकृत्वो निःशङ्कः सदानन्दोऽवलीलया ।५०।

राज्यं देयं शिरो देयं प्राणा देयाश्च पुत्रक ।
एवंभूतं च कवचं न देयं प्राणसंकटे ।५१।

इति श्रीब्रह्मवैवर्त्त महापुराणे नारायणनारसंवादे गणपतिखण्डे कवचप्रदानं नामैकत्रिंशत्तमोऽध्यायः ।

## अथ त्रैलोक्य विजय कृष्णस्तोत्रम्

### महादेव उवाच

परं ब्रह्म परं धाम परं ज्योतिः सनातनम् ।
निर्लिप्तं परमात्मानं नमामि सर्वकारणम् ।१।

स्थूलात् स्थूलतमं देवं सूक्ष्मात् सूक्ष्मतमं परम् ।
सर्वदृश्यमदृश्यं च स्वेच्छाचारं नमाम्यहम् ।२।

साकारं च निराकारं सगुणं निर्गुणं प्रभुम् ।
सर्वाधारं च सर्वं च स्वेच्छारूपं नमाम्यहम् ।३।

अतीवकमनीयं च रूपं निरुपमं विभुम् ।
करालरूपमत्यन्तं बिभ्रतं प्रणमाम्यहम् ।४।

कर्मणः कर्मरूपं त साक्षिणं सर्वकर्मणाम् ।
फलं च फलदातारं सर्वरूपं नमाम्यहम् ।५।

स्रष्टा पाता च संहर्ता कलया मूर्तिभेदतः ।
नानामूर्तिः कलांशेन यः पुमांस्तं नमाम्यहम् ।६।
स्वयं प्रकृतिरूपश्च मायया च स्वयं पुमान् ।
तयोः परं स्वयं शश्वत् तं नमामि परत्परम् ।७।
स्त्रीपुँनपुँसकं रूपं यो बिभर्ति स्वमायया ।
स्वयं माया स्वयं मायी यो देवस्तं नमाम्यहम् ।८।

तारणं सर्वदुःखानाँ सर्वकारणकारणम् ।
धारणं सर्वविश्वानां सर्वबीजं नमाम्यहम् ।९।

तेजस्विनां रविर्यो हि सर्वजातिषु ब्राह्मणः ।
नक्षत्राणां च यश्चन्द्रस्तं नमामि जगत्प्रभुम् ।१०।

रुद्राणां वैष्णवानां च ज्ञानिनां यो हि शंकरः ।
नागानां यो हि शेषश्च तं नमामि जगत्पतिम् ।११।

प्रजापतीनां यो ब्रह्मा सिद्धानां कपिलः स्वयम् ।
सनत्कुमारो मुनिषु तं नमामि जगद्गुरुम् ।१२।

देवानां यो हि विष्णुश्च देवीनां प्रकृति स्वयम् ।

स्वायम्भुवो मनूनां यो मानवेषु च वैष्णवः ।
नारीणां शतरूपा च बहुरूपं नमाम्यहम् ।१३।
ऋतूनां यो वसन्तश्च मासानां मार्गशीर्षकः ।
एकादशी तिथीनां च नमामि सर्वरूपिणम् ।१४।
सागरः सरितां यश्च पर्वतानां हिमालयः ।
वसुन्धरा सहिष्णूनां तं सर्वं प्रणमाम्यहम् ।१५।
पत्राणां तुलसीपत्रं दारुरूपेषु चन्दनम् ।
वृक्षाणां कल्पवृक्षो यस्तं नमामि जगत्पतिम् ।१६।
पुष्पाणां पारिजातश्च शस्यानां धान्यमेव च ।
अमृतं भक्ष्यवस्तूनाँ नानारूपं नमाम्यहम् ।१७।
ऐरावतो गजेन्द्राणाँ वैनतेयश्च पक्षिणाम् ।
कामधेनुश्च धेनूनां सर्वरूपं नमाम्यहम् ।१८।
तैजसानां सुवर्णं च धान्यानां यव एव च ।
यः केशरी पशूनां च वररूपं नमाम्यहम् ।१९।
यक्षाणां च कुबेरो यो ग्रहाणां च वृहस्पतिः ।
दिक्पालानां महेन्द्रश्च तं नमामि परं वरम् २०।
वेदसंघश्च शास्त्राणां पण्डितानां सरस्वती ।
अक्षराणामकारो यस्तं प्रधानं नमाम्यहम् ।२१।

मन्त्राणां विष्णुमन्त्रश्च तीर्थानां जाह्नवी स्वयम् ।
इन्द्रियाणां मनो यो हि सर्वश्रेष्ठं नमाम्यहम् ।२२।

सुदर्शनं च शस्त्राणां व्याधीनां वैष्णवो ज्वरः ।
तेजसां ब्रह्मतेजश्च वरेण्यं तं नमाम्यहम् ।२३।

निषेकश्च बलवतां मनश्च शीघ्रगामिनाम् ।
कालः कलयतां यो हि तं नमामि विलक्षणम् ।२४।

ज्ञानदाता गुरूणां च मातृरूपश्च बन्धुषु ।
मित्रेषु जन्मदाता यस्तं सारं प्रणमाम्यहम् ।२५।

शिल्पीनां विश्वकर्मा यः कामदेश्च रूपिणाम् ।
पतिव्रता च पत्नीनां नमस्यं तं नमाम्यहम् ।२६।

प्रियेषु पुत्ररूपो यो नृपरूपो नरेषु च ।
शालग्रामश्च यन्त्राणां तं विशिष्टं नमाम्यहम् २७।

धर्मः कल्याणबीजानां वेदानां सामवेदकः ।
धर्माणां सत्यरूपो यो विशिष्टं तं नमाम्यहम् ।२८।

जले शैत्यस्वरूपो यो गन्धरूपश्च भूमिषु ।
शब्दरूपश्च गगने तं प्रणम्यं नमाम्यहम् ।२९।

ऋतूनां राजसूयो यो गायत्री छन्दसां च यः ।
गन्धर्वाणां चित्ररथस्तं गरिष्ठं नमाम्यहम् ।३०।

क्षीरस्वरूपो गव्यानां पवित्राणां च पावकः ।
पुण्यदानां च यः स्तोत्रं तं नमामि शुभप्रदम् ।३१।
तृणानां कुशरूपो यो व्याधिरूपश्च वैरिणाम् ।
गुणानां शान्तरूपो यश्चित्ररूपं नमाम्यहम् ३२।
तेजोरूपो ज्ञानरूपः सर्वरूपश्च यो महान् ।
सर्वानिर्वचनीयं च तं नमामि स्वयं विभुम् ३३।
सर्वाधारेषु यो वायुर्यथात्मा नित्यरूपिणाम् ।
आकाशो व्यापकानां यो व्यापकं तं नमाम्यहम् ३४।
वेदानिर्वचनीयं यत्र स्तोतुं पण्डितः क्षमः ।
यदनिर्वचनीयं च को वा तत्स्तोतुमीश्वरः ।३५।
वेदा न शक्ता यं स्तोतुं जडीभूता सरस्वती ।
तं च वाङ्मनसोः पारं को विद्वान् स्तोतुमीश्वरः ।३६
शुद्धतेजःस्वरूपं च भक्तानुग्रहविग्रहम् ।
अतीवकमनीयं च श्यामरूपं नमाम्यहम् ।३७।
द्विभुजं मुरलीवक्त्रं किशोरं सस्मितं मुदा ।
शश्वद् गोपाङ्गनाभिश्च वीक्ष्यमाणं नमाम्यहम् ।३८।
राधया दत्तताम्बूलं भुक्तवन्तं मनोहरम् ।
रत्नसिंहासनस्थं च तमीशं प्रणमाम्यहम् ।३९।

रत्नभूषणभूषाढ्यं सेवितं श्वेतचामरैः ।
पार्षदप्रवरैर्गोपकुमारैस्तं नमाम्यहम् ।४०।
वृन्दावनान्तरे रम्ये रासोल्लाससमुत्सुकम् ।
रासमण्डलमध्यस्थं नमामि रसिकेश्वरम् ।४१।
शतशृङ्गे महाशैले गोलोके रत्नपर्वते ।
विरजापुलिने रम्ये प्रणमामि विहारिणम् ।४२।
परिपूर्णतमं शान्तं राधाकान्तं मनोहरम् ।
सत्यं ब्रह्मस्वरूपं च नित्यं कृष्णं नमाम्यहम् ।४३।
श्रीकृष्णस्य स्तोत्रमिदं त्रिसंध्यं यः पठेन्नरः ।
धर्मार्थकाममोक्षाणां स दाता भारते भवेत् ।४४।
हरिदास्यं हरौ भक्तिं लभेत् स्तोत्रप्रसादतः ।
इह लोके जगत्पूज्यो विष्णुतुल्यो भवेद् ध्रुवम् ।४५।
सर्वसिद्धेश्वरः शान्तोऽप्यन्ते याति हरेः पदम् ।
तेजसा यशसा भाति यथा सूर्यो महीतले ।४६।
जीवन्मुक्तः कृष्णभक्तः स भवेन्नात्र संशयः ।
अरोगी गुणवान् विद्वान् पुत्रवान् धनवान् सदा ।४७
षड्भिज्ञो दशबलो मनोयायी भवेद् ध्रुवम् ।
सर्वज्ञः सर्वदश्चैव स दाता सर्वसम्पदाम् ।४८।

कल्पवृक्षसमः शश्वद् भवेद् कृष्णप्रसादतः ।

इत्येवं कथितं स्तोत्रं त्वं वत्स गच्छ पुष्करम् ।
तत्र कृत्वा मन्त्रसिद्धिं पश्चात्प्राप्स्यसि वाञ्छितम्।४९

त्रिः सप्तकृत्वो निर्भूपां कुरु पृथ्वीं यथासुखम् ।
ममाशिषा मुनिश्रेष्ठ श्रीकृष्णस्य प्रसादतः ।५०।

इति श्रीब्रह्मवैवर्त महापुराणे नारायणनारसंवादे गणपतिखण्ड ब्रह्माण्ड विजय श्रीकृष्ण स्तोत्रप्रदानं नामद्वात्रिंशत्तमोऽध्यायः ।

परशुरामस्य तपश्चरणम्: –

नत्वा त्र्यम्बकमम्बिकां भगवतीं श्री भद्रकालीं मुदा
तीर्थं पुष्करमभ्युपेत्य परशुः सन्मन्त्रसिद्धिं व्यधात् ।
मासं भक्तिसमन्वितस्त्वनशनः श्रीकृष्णपादाम्बुजं
प्राणायामपरायणः स्वहृदये ध्यायन् स्वयं ददृशे १३४

भावार्थः– तत्पश्चात् परशुराम जी हर्षपूर्वक शिव, पार्वती (दुर्गा) एवं भद्रकाली को प्रणाम करके पुष्करतीर्थ में पहुंच कर वहां मन्त्रसिद्ध करने लगे। एक मास तक अन्न, जल का त्याग कर दिया एवं भक्ति पूर्वक श्रीकृष्ण चरणकमल का ध्यान करते हुए वायु को अवरुद्ध कर लिया। स्वयं प्रकाश दिखाई देने लगा ।१३४।

सूर्य मण्डले श्रीकृष्णदर्शनम्:—

**अक्ष्युन्मील्य नभोमहो दशदिशोऽप्युद्योतयन्तं रविं**
**तेजोमण्डलमध्यगं सुपुरुषं सद्रत्नयानस्थितम् ।**
**ईशद्धास्य प्रसन्नमास्यनयनं लोकोत्तरं सुन्दरं**
**भूम्नाऽऽनम्य सदण्डवद्वरमसौ वव्रे तमिष्टेश्वरम् ।१३५।**

भावार्थः—फिर आंखें खोलकर देखा तो उनको आकाश एक अद्भुत तेज से व्याप्त दिखायी पड़ा। उस तेज से दशों दिशाएं उद्दीप्त हो रही थी। और सूर्य का तेज प्रतिहत हो गया था। उस तेजोमण्डल के मध्य उन्हें एक रत्ननिर्मित विमान दिखायी पड़ा जिस पर एक अत्यन्त सुन्दर श्रेष्ठ पुरुष दृष्टिगोचर हो रहे थे। वे भक्तों पर अनुग्रह करने वाले थे तथा उनका मुख मन्दमुस्कान से खिल रहा था। परशुराम ने उन इष्टेश्वर (श्रीकृष्ण महाराज जी) को दण्ड की भान्ति लेट कर सिर से प्रणाम किया और वर मांगा।१३५

परशुरामस्य वरयाचनम्:—

**निर्भूपामचलां विधाय सकलां त्रिसप्त कृत्वो मृधे**
**भक्तिं मे ह्यनमायिनीमतिदृढां पादारविन्दे निजे ।**
**दास्यं देहि सुदुर्लभं हि भगवन् ! पादाम्बुजे शाश्वतं**
**दत्वास्मै हृदिवाञ्छितं वरमसौ कृष्णस्तु स्वान्तर्दधे ।१३६**

भावार्थ—हे भगवान् ! मैं इक्कीस बार पृथ्वी को भूपालों से रहित करदूं; आपके चरण कमल में अनपायिनी (कभी

नाश न होने वाली सुदृढ़ भक्ति हो और मैं निरन्तर आप के पादारविन्द का सेवक बना रहूं यह वर मुझे प्रदान कीजिये।, तब श्री कृष्ण जी इनको हृदय के मनोरथानुकूल वर देकर अन्तर्धान हो गये।१३६

तपश्चर्यान्ते रामस्य स्वाश्रमं प्रत्यागमनम्:—

**नत्वा कृष्णमसौ जगाम भवनं सत्सूचकैर्मंगलै-**
**र्वाञ्छासिद्धि विधायकैः सुशकुनैः स्फीतं प्रसन्नं मनः।**
**सम्भाष्य स्वजनान् गृहेषु सकलान् तस्थौ सपर्शुर्मुदा**
**शिष्य भ्रातृवरांश्चकार विधिना सत्सिद्धमन्त्रान्वितान्।१३७**

भावार्थ:—वर प्राप्ति के पश्चात् श्री कृष्ण भगवान् जी को प्रणाम करके अपने आश्रम को लौट आये। शुभ सूचक निमित्तों के द्वारा, मनोरथ सिद्धि सूचक शुभ शकुनों से मन प्रसन्न एवं सन्तुष्ट होने से मनोबल की वृद्धि हुई अपने घरेलु स्वजनों को सभी वृत्तान्त सुना दिया फिर प्रसन्नचित्त परशुराम जी आश्रम में ही रहने लगे। अपने एवं पिता जी के शिष्यों समस्त भाइयों को विधिवत् मन्त्र पुरश्चरणों सहित सिद्ध करवा दिये।१३७।

सहस्रबाहुराज्ञः आश्रमं प्रतिदूतप्रेषणम्:—

**तैः सार्धं बलवान् बभूव गमनोदर्कः स रामो जयैः**
**श्रुत्वासौ जय सूचकं च बुबुधे मनसा च सर्वं जयम्।**

**आकाशे जयवाचकेऽत्र भविता वैरिक्षयं तेन वै**
**प्रातर्मङ्गल सूचकैः सुशकुनैर्दूतो नृपं प्रेषितः ।१३८।**

भावार्थः—उन बन्धुओं के साथ वह बलवान् राम जय सूचक शब्दों से मन में जय की धारणा दृढ हो गयी कि अब सब तरह से सर्वत्र जय प्राप्त होगी। आकाशबाणी हुई "कि हे राम तुमारी जय और वैरियों का नाश होगा।" इस से प्रोत्साहित होकर सभी विजय यात्रा के लिये उद्यत हुए। राम ने उसी समय जय सूचक शब्दों के सुनाई देने पर प्रात काल मांगलिक शकुनों के साथ ही सहस्रबाहु के पास दूत भेज दिया ।१३८।

विजय यात्रयां शुभशकुनानि.—

**अग्रे धेनु सवत्सा वृषगजतुरगा दक्षिणावर्ति वह्निः**
**दिव्यस्त्री पुण्यकुम्भो द्विजवरगणिका श्वेतमाला पताका।**
**मत्स्यो मांसं च मद्यं दधिमधु सहितं काञ्चनशुक्लवस्त्रं**
**दृष्ट्वा स्पृष्ट्वा पठित्वा फलमिह लभते मानवो गन्तुकामः।**

भावार्थः—शुभयात्रा में चलते समय आगे बछडे सहित गाय, बैल, गज, अश्व, दाईं ओर प्रज्वलित या धूमरहित अग्नि, दिव्यस्त्री, पूर्णकुम्भ, विप्रश्रेष्ठ गणिका (वैश्या), श्वेतमाला, पताका, मत्स्य, मांस, मद्य, दधि, मधु, सुवर्ण, श्वेतवस्त्र, उक्त जीववस्तुओं के दर्शन स्पर्शन, पठन (उच्चारण) करके विजययात्रा में जाने की इच्छावाला मनुष्य वाञ्छित मनोरथ सिद्धि फलरूप में लाभ प्राप्त करता है।

रामदूतस्य कार्तवीर्याश्रमे राजसभायां गमनम् —

कृष्णध्यानपरायणो भगवतः श्रीरामदूतोऽभ्यगाद्
दिव्यां हैहयपालितां हि नगरीं माहिष्मतीमैक्षत ।
उच्चैर्हर्म्ययुतं खचुम्बिशिखरं श्रीकार्तवीर्याश्रमं
प्राप्तोऽसौ नृपसंसदिष्ठसचिवैः सार्द्धं नृपं प्राब्रवीत् ।१३९

भावार्थः—श्रीकृष्णजी का ध्यान करता हुआ भगवान् श्री परशुराम जी का दूत चल पड़ा। उसने दिव्य हैहय राजपालित माहिष्मती नगरी को देखा। ऊंचे महलों से युक्त आकाश को चूमने वाले शेखर युक्त राजाकार्तवीर्याश्रम में जा पहुंचा वहां राजसभा में मन्त्रियों से घिरे सहस्रबाहु राजा को युद्ध का सन्देश सुनाने लगा ।१३९।

रामदूत सन्देशः —

न्यग्रोधाक्षयमूलके ऋषिकुले श्रीनर्मदायास्तटे
श्रीरामो निजसोदरैः सममसौ युद्धं चिकीर्षुस्त्वया
तत्र त्वं किल गन्तुमर्हसि महाराजाशु युद्धं कुरु
निर्भूपामचलां चिकीर्षति विभुस्त्रिः सप्तकृत्वो मृधे ।१४०

भावार्थः—श्रीनर्मदागङ्गा के तटपर अक्षयवट के तले ऋषिकुल में श्रीपरशुराम जामदग्न्य जी अपने भाइयों सहित तेरे साथ युद्ध करने के इच्छुक आपकी प्रतीक्षा कर रहे हैं अत आप शीघ्रातिशीघ्र उनसे युद्ध करें वे समग्र भूमि को २ बार

युद्ध में निःक्षत्र (राजाओं से रहित) करना चाहते हैं।१४०। रामदूत यह सन्देश देकर मौन हो गये।१४०।

दूतस्यरामसन्निधौ प्रत्यावर्तनम्, मनोरमार्जुनसंवादश्च:—

**दूतो राममुपेयिवांश्च नरपः सन्नह्य योद्धुँ मनाः**
**प्राप्तोऽसौ निजसंसदिष्ठसचिवैः सिंहासने संस्थितः।**
**यान्तं योद्धु मनोरमा प्रियपतिं दृष्ट्वावरोद्धुँ गता**
**दृष्ट्वा ताँ नृपतिः प्रसन्नवदनः प्रोवाच कान्ते शृणु १४१**

भावार्थः—रामदूत राम जी के पास पहुंच गया। राजा सहस्रबाहु शस्त्रास्त्र कवचादिओं से सुसज्जित होकर युद्ध के लिए प्रस्तुत होकर अपनी सभा में बैठे मन्त्रियों के साथ सिंहासन पर बैठा युद्ध में जाते हुए मनोरमा पट्टमहिषी प्रियपति को देखकर युद्ध मे टालने के लिये चली गयी उसे राजा ने देख कर प्रसन्न मुख होकर कहा हे कान्ते ! सुनो।१४१।

राजा दूतसन्देशाभिप्रायं मनोरमाग्र प्रकटयति —

**मामेवाह्वयते स्वयं स परशुस्तिष्ठंस्तटे नार्मदे**
**युद्धार्थं सहसोदरैः शिववरात्सम्प्राप्य शस्त्रास्त्रविद्।**
**मन्त्राढ्यं कवचं हरेश्च विधिवत् त्रिःसप्तकृत्वो मृधे**
**निर्भूपामचलां चिकीर्षति यतो हत्वा च मां संयुगे।१४२।**

भावार्थः—स्वयं प्रभु परशुराम जी नर्मदा के तट पर विराजमान होकर मेरे साथ युद्ध करने के लिये अपने भाइयों को साथ

लेकर भगवान् शङ्कर जी से सुन्दर शस्त्र अस्त्र समन्त्रक वैष्णव कवचादि विद्याओं को प्राप्त करके मेरी प्रतीक्षा कर रहा है। उसने घोर प्रतिज्ञा की है कि मुझ (सहस्रबाहु) को मारकर २१ बार पृथिवी को दानवाविष्ट क्षत्रियों से रहित करने की इच्छा की पूर्ति के लिये केवल मुझे ललकार रहा है ।१४२।

राज्ञोर्दुनिमित्त प्रकटनम्:—

**प्राणान्दोलनतत्परं मम मनः क्षुब्धं मुहुर्मत् प्रिये !**
**वामाङ्गे स्फुरणं निरन्तर तया दृष्टं च दुःस्वप्नियम् ।**
**तैलाभ्यङ्गितमात्महानिदमहोऽदर्श खरारोहणं**
**लोहालङ्कृति भूषितारुणमयं वासः कुसीदाञ्चितम् ।१४३**

भावार्थ:—मेरा मन अत्यन्त क्षुब्ध होकर बार २ प्राणान्दोलन कर रहा है हे प्रिये ! निरन्तर वामाङ्ग फड़क रहे हैं; चलते फिरते सोते बैठते दुःस्वप्न देख रहा हूं गाढ़े तैल से मालिश किये हुए अपने आपका पातन करते लोहा लङ्कृत लालचन्दन से रङ्गे वस्त्रों से युक्त अपने आप को गधे की सवारी करते देखता हूं ।१४३।

राज्ञो दुःस्वप्न प्रकटनम्:—

**नीचैमस्तकमूर्ध्वपादमशुभं भूमौ भ्रमन्तं स्वतः**
**गच्छन्तं च विमुक्तकेशविकृतं नग्नं त्वदर्शं नरम् ।**
**ग्रामप्रत्यधिदेवरोदनमहं प्रातर्हि श्रुत्वाबुधं**
**सर्वस्वे !ऽयि मनोरमे ! कमपि मां सत्यं ह्युपायं वद ।१४४**

**भावार्थः**—मैंने एक पुरुष को देखा जो दिगम्बर (नंगधड़ङ्ग) था जिसके बाल बिखरे थे विकराल था जो नीचे मस्तक और ऊपर पैर किये पृथ्वी पर घूम रहा था। उसकी आकृति और बोली विकृत थी। फिर प्रातःकाल ग्राम के अधिदेव एवं प्रत्यधिदेव का रोदन सुनकर जाग पड़ा हे सर्वस्वे ! मनोरमे ! अब यथार्थ रूप में मुझे सही उपाय बताओ।१४४

मनोरमायायथार्थं मार्गप्रदर्शनम्ः—

**श्रुत्वा राजवचोऽतिखिन्नहृदया प्रोवाच राज्ञी नृपं**
**नाथ ! श्रेष्ठमहीभृतांवर ! प्रभो ! वाक्यं शुभं मे शृणु।**
**विष्णवंशो जमदग्निजोऽत्र भगवान् शम्भोःस्वयं शिष्यराण्-**
**निर्भूपामचलां विधातुममुना घोरा प्रतिज्ञा कृता।१४५।**

**भावार्थः**—राजा की बात सुनकर मनोरमा का हृदय अति दुःखी रोदनशील होते हुए भी राजाधिराज कार्तवीर्य से लड़खडाती वाणी में बोली हे नाथ ! समस्तराजाओं में श्रेष्ठ ! मुझे आप प्राणों से भी अधिक प्रिय हैं। अत हे प्राणेश्वर ! मेरे हितकारक वचन की ओर ध्यान दीजिये। जमदग्निनन्दन महाबली भगवान् परशुराम नारायण अंश हैं। सृष्टि के संहारकर्ता जगदीश्वर स्वयं शिव के शिष्यों में मूर्धन्य हैं जिनकी घोर प्रतिज्ञा है कि मैं २१ वार पृथ्वी को राजाओं से शून्य कर दूंगा।१४५।

मनोरमाया: पुनाराज्ञे मार्गदर्शनम्:—

रामेण त्यज संगरं नरपते ! सौख्यं स्वयं चाप्नुहि
जित्वा पापिनमाहवे दशमुखं शूरं हि स्वं मन्य से ।
पापेनैव पराजितो दशमुखः क्वापि त्वया नो जितो
दत्तं दत्तवरेण यत्तवहितं ज्ञानं त्वया विस्मृतम् ।१४६।

भावार्थ:—परशुराम जी से युद्ध त्याग देंगे तो आप स्वयं सुखी रहोगे पापी रावण को युद्ध में जीतकर जो आप अपने आप को शूरवीर मानते हैं (यह आप की भूल है) क्योंकि पापी रावण अपने पाप से ही पराजित हो गया उसे आपने कहीं भी नहीं जीता। दत्तात्रेय जी ने जो आपके हित के लिये परमज्ञान दिया था वह आप सब भूल गये हैं ।१४६।

मनोरमाया सन्मार्गदर्शनम्:—

दुर्बुद्धे ! तदिहास्ति चेत्तव मनः किं विप्रहिंसावृत
सौख्यार्थं मृगयाँगते त्वयि ततस्तूपोष्य विप्राश्रमे ।
भुक्त्वामिष्टमपूर्वभोजनमहो विप्रो हि व्यर्थं हतो
देवब्रह्मगुरून् पराभवकृतो ऽभीष्टेष्टरुष्टे विपत् ।१४७।

भावार्थ:—हे दुर्बुद्धे ! यदि भगवान् दत्तात्रेय का दिया हुआ ज्ञान है विस्मृत नहीं हुआ होता तो फिर आपका मन ब्राह्मण की हत्या करने में क्यों प्रवृत्त हुआ ? आप तो मनोविनोद के लिये शिकार खेलने गये थे। वहां ब्राह्मण के आश्रम में ठहर कर आपने अपूर्व मिष्टान्न का भोजन किया और व्यर्थ ही

ब्राह्मण को मारडाला जो गुरु, ब्राह्मण और देवता का अपमान करता है उसके इष्टदेव उस पर रुष्ट हो जाते हैं और चारों ओर उसे विपत्ति ही घेर लेती है ।१४७।

मनोरमाया: मार्गदर्शनोपसंहार:—

**दत्तात्रेयपदाम्बुजं स्मरपते ! विघ्नच्छिन्भक्तिर्गुरौ**
**गच्छ त्वं शरणं भृगोः कुलमणिं श्रेष्ठञ्च देवेष्वपि ।**
**तुष्टे विप्रवरे सदा प्रियपते तुष्टाः समे देवता**
**इत्युक्त्वा नृपमङ्कगं कृतवती दृष्ट्वा रुरोदाननम् ।१४८।**

भावार्थ:—हे प्राणपते ! श्रीदत्तात्रेय भगवान् के चरणकमलों का स्मरण करो । गुरु में गाढ भक्ति विघ्नों का नाश करने वाली होती है। देवताओं में भी श्रेष्ठ भृगुकुलमणि भगवान् परशुराम जी की चरण शरण में चले जाइये हे प्रियपते ! ब्राह्मण श्रेष्ठ सन्तुष्ट हो जाने पर समग्र देवता प्रसन्न हो जाते हैं ऐसा कहकर राजा को गोद में लेकर उसके मुखारविन्द को देखकर रोदन आरम्भ कर दिया १४८।

राज्ञः मनोरमोद्बोधनम्:—

**सम्बोध्याथ मनोरमां प्रियवचः प्रोवाच राजोचितं**
**शोकाढ्यं वचनं सभासु नियतं कान्तेऽप्रशस्यं भवेत् ।**
**कालः सृष्टिकरः पुनर्भवमृती कालो हि राज्यप्रदः**
**कालः पालयते स्वयं स हरते कृष्णो हि कालाधिपः।१४९**

भावार्थः—मनोरमा को होश में लाकर राजा ने सभा में उचित मधुरवाणी में कहा—कान्ते ! सभा में शोक से युक्त वचन प्रशस्त नहीं होते। काल ही सुखदुःखादि सहित मृत्यु एवं पुनर्जन्म की सृष्टि का रचने वाला है। काल ही राज्य देने वाला है काल ही पालन करता है. काल ही संहार करने वाला होता हैं। कालों के काल स्वयं भगवान् कृष्ण जी ही हैं ।१४९।

राज्ञ: सद्विचार:—

**विष्णवंशो भगवान् परश्वधधरो निर्भूपकर्ता महीं**
**वध्योऽहं च मनोरमेऽस्य विफला माभूत् प्रतिज्ञा प्रभोः।**
**भाविज्ञोऽस्मि कथं प्रयामि शरणं ? सम्भावितानाँ कुले**
**सा कीर्तिर्मरणादपीयमधिका जानामि सर्वंप्रिये ।१५०।**

भावार्थः—साक्षात् नारायण के अंश भगवान् परशुराम जी राजाओं से रहित पृथ्वी को करने वाले हैं। मैं उनका वध्य (बलिका बकरा) हूं अतः हे मनोरमे ! उन प्रभु परशुराम जी की प्रतिज्ञा भंग न हो। मैं भविष्य में होने वाले भावि फल को जानता हूं। कैसे शरण में चला जाऊं प्रतिष्ठित महानुभावों की अपकीर्ति मरने से भी अधिक दुःखदायिनी मानी जाती है। इस प्रकार मैं चक्रवर्ती होने के कारण सर्वज्ञ हूं सब कुछ जानता हूं ।१५०।

राज्ञोयुद्धार्थं सन्नह्यागन्तुं प्रवृत्तिः—

**इत्युक्त्वा स सहस्रबाहुरनघः संनह्य सेनाबलं**
**वाद्यैर्मङ्गल सूचकैः स समरं गन्तुँ प्रवृत्तोऽभवत् ।**

**ज्ञात्वा सा गमनोन्मुखं नृपवरं तस्थौ च क्रीडाङ्गने**
**कृत्वा वक्षसि कान्तमास्यकमलं दृष्ट्वा चुचुम्बप्रियम् ।१५१**

**भावार्थ:**—मनोरमा इस प्रकार कहकर राजा सहस्रबाहु अपने आपको निष्पाप समझता हुआ सेना बल को सजा कर मङ्गल सूचक वजते हुए वाजों के साथ वह माहिष्मती नरेश युद्ध में जाने के लिये उद्यत हुआ। उस युद्धयात्रा में जाते हुए राजा को जान कर मनोरमा क्रीडा भवन के मैदान में खड़ी हो गई राजा को आते ही गले लगाकर उसको देखती जाती और चूमती जाती थी ।१५ ।

**मनोरमाया योगद्वारा शरीरत्याग:**—

**पुत्रानग्रगतान् विधाय सकलान् बन्धूंश्च स्वान् किङ्करान्**
**यद्यत्स्वामिमुखाच्छ्रुतं स्वमनसा चक्रे भविष्यं स्मृतौ ।**
**निर्मूलं स्वपुनर्भवं च द्विविधं सन्यस्य कर्मापि तत्**
**सा सस्मार हरेः पदं स्वहृदये मेनेऽत्र सत्यं भवे ।१५२।**

**भावार्थ:**—पुत्र, बन्धुबान्धव एवं अपने नौकरों को आगे करके मनोरमाने अपने स्वामी के मुखारविन्द से भविष्य की जो बातें सुनी थीं उनको अपने मन में धारण कर लिया और यह समझ लिया कि यह बातें अवश्य सत्य होंगी इसी लिये उसने अपने पति को गले से लगा लिया निर्मूल एवं पुनर्जन्म रहित द्विविध कर्मका परित्याग करके उसने

भगवान् विष्णु के परमपद (चरण कमलों) का अपने हृदय में स्मरण करने लगी उसने इस संसार में केवल सत्य को नित्य सनातन माना। हरि का नाम ही सत्य है शेष सब कुछ असत्य है।१५२।

मनोरमाया योगेन शरीरत्याग:—

**भित्वाषट्चक्रमेषा सकल पवनं मूर्ध्नि संस्थाप्य योगै-**
**र्ब्रह्मरन्ध्रे सहस्रात्मकदलयुते पंङ्कजे न्यस्य स्वान्तम्।**
**स्वार्थादाकृष्य वार्बुद्बुदनिभमनो निष्कले ब्रह्मणिष्ठ**
**प्राणांस्तत्याज कान्ता न च निजहृदा प्राणनाथं स्वकीयम्।**

भावार्थ—तत्पश्चात् मनोरमाने योग द्वारा षट्चक्र का भेदन करके वायु को मूर्धा में स्थापित किया और चञ्चल मन को जल के बुलबुले के समान क्षणभङ्गुर विषयों से खींच कर, ब्रह्मरन्ध्र में स्थित सहस्रदल संयुक्त कमल पर स्थापित करके उसे ज्ञान द्वारा निष्कलब्रह्म में स्थापित कर दिया। उसने वहीं प्राणत्याग दिये परन्तु प्राणों से अधिकप्रिय राजा को नहीं त्यागा १५३।

राज्ञोविलाप, आकाशवाण्या च सान्त्वनम्:—

**दृष्ट्वा तां हि मनोरमां प्रियतमां प्राणैर्वियुक्तां नृपः**
**सन्नाह च विहाय वक्षसि कृतामुच्चै रुदन्वंश्च खे।**
**जातावागशरीरिणी 'भवदृढो राजन् कथं रोदिषि ?**
**श्रेष्ठस्त्वमिहवह ज्ञानिनां गुरुवराद् दत्तप्रसादाद्भुवि।१५४**

भावार्थः—राजा ने प्रियतमा मनोरमा को प्राणों से विमुक्त देखकर युद्ध की त्यारी के कवच कुण्डलादि सज्जीकरण को त्याग कर उसे हृदय मे लगाकर जोर जोर से ऊंचे २ रोते सुनकर आकाश वाणी हुई कि हे राजन् ! क्यों रोते हो ? दृढ हो जाओ (अपने आपको सम्भालो) भगवान् दत्तात्रेय गुरु जी के बर प्रसाद से इस संसार में इस भूमि पर तुम ही महाज्ञानियों में श्रेष्ठ हो ।१५४।

**आकाशवाण्या राज्ञः सान्त्वनमः—**

**संसारं जलबुद्बुदाभमखिलं पश्याद्य त्वं शोभनं**
**पद्मांशा तु मनोरमा गतवती साध्वी स पद्मालयम् ।**
**वैकुण्ठं व्रज सत्वरं नरपते कृत्वा रणं सङ्गरे**
**श्रुत्वैतच्च जहौ सशोकमनघश्चित्वा चितां चान्दनीम् ।१५५**

भावार्थः—अतः सारे संसार को रमणीय दीख रहा है; जल के बुलबुले के समान क्षणभङ्गुर समझो । यह साध्वी मनोरमा तो लक्ष्मी के अंश से उत्पन्न हुई थी; अतः वह लक्ष्मी के वासस्थान (वैकुण्ठ धाम) को चली गयी । अब तुम भी रणभूमि में युद्ध करके वैकुण्ठधाम में जाओ । आकाशवाणी के इस वचन को सुनकर नरेश शोक का परित्याग कर दिया । तत्पश्चात् चन्दन की लकड़ी से दिव्य चिता तैयार करदी ।१५५।

**मनोरमाया अन्त्येष्टिसंस्कारः—**

**दिव्यान्त्येष्टि विधिं विधाय सुतरां पुत्रैः स्वकीयैर्नृपो**
**नानारत्न सुवर्ण वस्त्र भरणान्यानीय देयानि च ।**

**विप्रेभ्यश्च मनोरमा गतिविधौ दत्तानि दानानि वै**
**पुत्रैः साङ्गक्रियां समाप्य नृपतिर्योद्धुं गतः सङ्गरे ।१५६।**

भावार्थः—तत्पश्चात् पुत्र द्वारा अग्नि संस्कार कराकर उसका दाह करवाया। फिर मनोरम गतिविधि में सहायक नाना प्रकार के रत्न, सुवर्ण, वस्त्र, खाद्यपदार्थादि दान देने योग्य वस्तुओं को लाकर ब्राह्मणों को दान दिये। इस प्रकार साङ्गोपाङ्ग मनोरमा की आत्म शान्ति के लिये और्ध्व दैहिक क्रिया समाप्त करके राजा कार्तवीर्य रणभूमि में युद्ध करने के लिये चल पड़ा ।१५६।

**राज्ञो युद्धयात्रा वर्णनम्:—**

**राजापश्यदमङ्गलं प्रतिपदं गत्वा पुनर्नाऽऽगतः**
**क्षुब्धप्राणधरश्च कुत्सितमना वामाङ्गस्पन्दैर्जडः ।**
**निःशङ्कः स तथापि ददृशे युद्धात्मकं मङ्गलं**
**राजासैन्यसमन्वितोऽद्भुतरणं वाद्यादिभिः प्राविशत् ।१५७**

भावार्थः—युद्ध की ओर आगे बढ़ने पर यद्यपि राजा को प्रत्येक पद में (प्रत्येक मार्ग में) अमङ्गल के ही दर्शन हुए; तथापि वह रणक्षेत्र की ओर बढता ही गया पुनः राजधानी को नहीं लौटा। राजा के प्राण निरन्तर क्षुब्ध रहने लगे मन एक दम कलुषित या दूषित सा हो गया; बायां अङ्ग फड़कने लगा एवं शरीर में जडता का राज्यछाने लगा। तथापि राजा को युद्ध में अपना मङ्गल दीख रहा था; अतः वह

निःशङ्क हो सारी सेनाओं को साथ लेकर युद्धक्षेत्र में प्रविष्ट हुआ ।१५७।

युद्धे पुरस्तात् भगवतः परशुरामस्य दर्शनम्:—

**दृष्टवाग्रे परशुं परात्पर विभुं सद्योऽवतीर्णो रथाद्**
**राजेन्द्रैः सहभक्तितो नृपवरो बद्धाञ्जलिः वाग्यतः ।**
**साष्टाङ्गं प्रणिपत्य भूतलगतो दृश्योऽभवद्दण्डवद्**
**रामस्तं युयुजे सदाशिषमहो स्वर्याहि सद्वाञ्छितम् ।१५८**

भावार्थः—वह भृगुवंशीय परात्पर भगवान् श्री परशुराम जी को सामने देखकर वह तुरन्त रथ से उतर पड़ा और भक्ति-पूर्वक बद्धाञ्जलि, वाणी का संयम कर, बड़-बड़े राजाओं के साथ दण्ड की भान्ति भूमिपर लेटकर उनको प्रणाम किया तब भगवान् परशुराम जी ने "तुम स्वर्ग में सिधारो" ऐसे राजा को अभीष्ट आशीर्वाद दिया । ५८

परशुरामं नत्वा राजेन्द्रैः सह स्वस्वरथमारुह्य
वाद्याद्यैर्दानादि वर्णनम् —

**तेषां सह्यमभूत्तदा प्रकृतिजाऽलङ्घ्या हि विप्राशिषो**
**राजेन्द्रैः परशुं प्रणम्य सहसा राजाधिराजेश्वरः ।**
**आरुह्यात्मरथं सुसज्जितमहो युद्धोपहारैर्युतं**
**भेरी दुन्दुभिझर्झरैश्च मुरजैर्वाद्यैश्च दानं व्यधात् ।१५९।**

भावार्थः—वह परशुराम जी का आशीर्वाद उनके मनोऽनुकूल ही हुआ क्योंकि ब्राह्मण के आशीवाद दुर्लङ्घ्य होते हैं ।

तदनन्तर राजराजेश्वर कार्तवीर्य उसीक्षण राजाओं सहित परशुराम जी को नमस्कार करके तुरन्त ही रथपर जो नानाप्रकार की युद्ध की सामग्री से सम्पन्न था; सवार हुआ। फिर उसने सहसा दुन्दुभि, झर्झर, मुरजादि तरह-तरह के बाजे बजाते हुए ब्राह्मणों को धन दान किया।१५९।

परशुरामस्य राज्ञः समुद्बोधनम्:—

**राजेन्द्रैर्युतसंसदिऽठपरशुः प्रोवाच राजेश्वरं**
**राजर्षे ! हरिचन्द्रयोः कुलमणे ! श्री कार्तवीर्यार्जुन ! ।**
**दत्तात्रेयमुनेस्त्रिदेवजहरेः शिष्योऽसि वै राजराट् !**
**श्रुत्वा वेदवेदो मुखात्त्वमखिलान्वेदांश्च विद्वान्त्स्वयम् १६१**

भावार्थः—तब वेद वेत्ताओं में श्रेष्ठ परशुराम जो राजाओं की उस सभा में राजाधिराज कार्तवीर्य से हितकारक, सत्य एवं नीतियुक्त वचन बोले—हे राजर्षे ! लक्ष्मीनारायण के (अश्व अश्विनी के रूप) में से उत्पन्न एकवीर की वशपरम्परा में हरिवंश एवं अत्रि, चन्द्र, बुध, पुरुरवा आयुष्कुमार, यदु, तुर्वसु आदि के क्रम से चन्द्रवंश में इस प्रकार हरि एवं चन्द्रवंश की परम्परा से उत्पन्न होने के कारण हरिचन्द्र वंशमणे ? श्री कातवीर्यार्जुन ! ब्रह्मा विष्णु शंकर भगवान् इन तीनों देवताओं के परमाद्भुत अंश भूत मुनीश्वर भगवान् दत्तात्रेय के शिष्यों में मूर्धन्य हे राजराट्। तुम स्वयं भी विद्वान् हो और वेदज्ञों के मुख से तुमने वेदोंका श्रवण भी किया है।१६०।

राज्ञाबुद्धिविडम्बना प्रतिपादनम्:—

**दुर्बुद्धिश्च सताँबिडम्बनमयो जाता कथं भूपते ?**
**पूर्वं लोभवशात्कथं त्वमहनो विप्रं निरीहं वद ।**
**सन्तप्ता विरहाग्निनास्य गृहिणी भर्त्रानुयाता सती**
**किन्ते भूप भविष्यतीह परतो मिथ्यैव सर्वं जगत् ।१६१**

भावार्थ:—इतने बुद्धिमान् और ज्ञानी होते हुए भी तुमे अब सज्जनों को बिडम्बित करने वाली बुद्धि कैसे उत्पन्न हुई ? तुमने पहले लोभवश निस्पृह ब्राह्मण की हत्या कैसे कर डाली ? जिसके कारण सती हो गई । हे भूपाल ! इन दोनों के वध से परलोक में तुमारी क्या गति होगी ? यह संसार तो पद्मपत्र पर पड़े जलविन्दु के समान मिथ्या ही है ।१६१।

पुनरपरां बिडम्बनां प्रकटयति:—

**दुःसद्भ्यां सहकीर्ति विग्रह कथा मात्रावशिष्टाधुना**
**दुष्कीर्तेः किमतो विडम्बनमहो लोके सतां घोषितम् ।**
**क्वयाता कपिला ? कुतोमुनिरसौ ? क्वासौ विवादोऽधुना ?**
**यद्राज्ञाविदुषा कृतं न हि कृतं तद्बालिकेनापि नु ? ।१६२।**

भावार्थ:—दुष्कीर्ति हो अथवा सत्कीर्ति इस की तो कथामात्र ही शेष रह जाती है । अहो ! सत्पुरुषों की दुष्कीर्ति हो; इस से बढ़कर और क्या बिडम्बना होगी ? कपिला कहां गयी ? मुनि कहां चले गये ? विवाद कहां गया ? परन्तु एक विद्वान्

राजा ने जो कर्म कर डाला, वह हलवाहा भी कभी करेगा ? अर्थात् नहीं कर सकता ।१६२।

अपरां विडम्बनामुदाहरति:—

**ईशन्त्वां समुपोषितं मम पित। दृष्ट्वा व्यधात्पारणं**
**दत्तं तस्य फलं त्वया नरपते जानासि किं सर्ववित् ।**
**दत्तं यद्विधिवत्त्वया प्रतिदिनं सद्ब्राह्मणेभ्योऽपि च**
**पूर्णं वै यशसा च ते जगदिदं तद्वार्धके क्वायशः ? ।१६३**

**भावार्थ:**—मेरे धर्मात्मा पिता ने तो तुमारे जैसे महानरेश को उपवास करते देख कर भोजन कराया। तुमने उनको वैसा फल दिया। राजन् ! तुमने शास्त्रों का अध्ययन किया तुम प्रतिदिन ब्राह्मणों को बिधिपूर्वक दान देते हो और यश से सारा जगद् व्याप्त है। फिर बुढापे में तुमारी अपकीर्ति क्यों हुई ? कैसे हुई ? ।१६३।

प्राचीना वन्दिगणा इत्थं गाथां गायन्ति:—

**दाता वरिष्ठो धर्मिष्ठो यशस्वान् पुण्यवान् सुधीः ।**
**कार्तवीर्यार्जुन समो न भूतो न भविष्यति ।**

ब्र. वै. पु.

प्राचीन काल के वन्दिगण इस प्रकार गाथा गाते हैं; कि इस भूतल पर कार्तवीर्यार्जुन राजा सहस्रबाहु के समान दाता, सर्वश्रेष्ठ धर्मात्मा, यशस्वी, पुण्यशाली, उत्तम बुद्धि सम्पन्न, न कोई हुआ है न कोई होगा। जो पुराणों में विख्यात है उसकी ऐसी अपकीर्ति ?।

परशुरामस्य राजसंसदि यथार्थोत्तर याचनम्:—

दुर्वाक्यं नृप दुःसहं नृजनुषामस्त्रात्सुतीक्ष्णादपि
स्वस्माद्स्यय सम्भवेऽपि न सतां वक्त्राद्दुरुक्तेर्भवः ।
सोहन्तेऽत्र दुरुक्तियुक्तवचनं वक्तुं क्वचिन्नोत्सहे
राजस्त्वद्य रवीन्दु वंशजवरेष्वत्रार्य सत्यं वद ।१६४।

भावार्थ—हे राजन् ! मनुष्य मात्र के लिये दुर्वाक्य (दुर्वचन) तीक्ष्ण से तीक्ष्ण अस्त्र से भी बढकर दुस्सह होता है; इसी लिये संकट काल में भी सत्पुरुषों के मुख से दुर्वचन नहीं निकलते। राजेन्द्र ! मैं तुम पर दोषारोपण नहीं कर रहा हूं, अपितु यथार्थ कह रहा हूं अतः इस राजसभा में सूर्य चन्द्र कुल के वंशज विद्यमान हैं इस लिये इन श्रेष्ठराजाओं में आर्य सत्य बताइये ।१६४।

राम प्रश्नोत्तरं राज्ञश्चोत्तरम्:—

इत्युक्त्वा विरराम राम भगवान् श्रीकार्तवीर्योऽभ्यधात्
विष्णवंशो ऽस्ययिराम ! शम्भुशरणं प्राप्त्या प्रपन्नोभवान् ।
येषामास्यकजात्सनातनतनुर्धर्मः श्रुतो भार्गव
तेषाँ त्वं जमदग्निनन्दनविभो ! साक्षाद् गुरोर्वै गुरो ! ।१६५

भावार्थः—युद्धस्थल में इतना कहकर भगवान् परशुराम जी चुप हो गये। तब राजा कार्तवीर्य ने कहना प्रारम्भ किया। अयि राम ! आप श्री भगवान् विष्णु के अंशु भगवान् शङ्कर

की शरण प्राप्ति के द्वारा प्रपन्न हो गये जिनके मुखारविन्द से आपने सनातन के अपूर्व शरीर रूप साक्षाद् विग्रहवान् धर्म का श्रवण किया है हे जमदग्नि नन्दन भगवान् ! आप उनके गुरु के भी गुरु हैं इस में कोई शंका का स्थान ही नहीं है ।१६५।

को ब्राह्मण. ? कश्च मोनोतिनिर्णयात्मकं पद्यम् —

**जातो ब्राह्मण एष कर्मप्रभवः सद्ब्रह्मभाव्रो भवेत्**
**स्वेधर्मे निरतश्च शुद्धिसदनः स ब्राह्मणः प्रोच्यते ।**
**अन्तर्बाह्यमनन् करोति जनने कर्माखिलं भूतले**
**मौनी यः सततं वदेत्स समये प्राच्यैर्मुनिः प्रोच्यते ।१६६।**

भावार्थ:—जो कर्मवश ब्राह्मण कुल में उत्पन्न हुआ है; ब्रह्मचिन्तन करता है । जो मनन करने के कारण नित्य बाहर भीतर कर्म करता रहता है । सदा मौन धारण किये रहता है और समय आने पर बोलता है वह मुनि कहलाता है ।१६६।

योगी हरिभक्तयो वैशिष्टयम् —

**स्वर्ण प्रस्तरयोश्च गेहवनयोः पङ्केऽथवा चन्दने**
**भावो यस्य समः समुनिभिः योगीश्वरः कीर्तितः ।**
**जीवेष्वत्र समेषु योऽपि हरिवत्साम्यं हृदाधारयेत्**
**भक्तिर्वैह्यनपायिनी यदि हरौ ज्ञेयःस भक्तो हरेः ।१६७।**

भावार्थ:—जिसकी स्वर्ण और साधारण पत्थर में, घर और जङ्गल में तथा कीचड एवं चिकने चन्दन में समता की भावना

हो वह योगीश्वर कहलाता है। जो सम्पूर्ण जीवों में भगवान् विष्णु की भावना रखता है। जिस को दृढरूप से भगवान् में भक्ति हो वही हरिभक्त कहलाता है।१६७।

वर्णक्रमेणस्पृहा वर्णनम् —

**विप्राणाँ हि धनं तपस्तदेव कथितं कल्पद्रुमः कामदः**
**ज्ञेया कामदुघा द्विजस्य सततं सिद्धा तपस्या स्पृहा।**
**ऐश्वर्येऽपि च भूभृतां क्रयकृतौ ज्ञेया विशां सत्स्पृहा**
**क्षत्राणां तपसि स्पृहा द्विजकृते वादस्पृहा निन्दिता।१६८**

भावार्थः—ब्राह्मणों का धन तप है तपस्या कल्पवृक्ष और कामधेनु के समान है। इसी लिये उनकी निरन्तर तप में इच्छा लगी रहती है। क्षत्रियों की ऐश्वर्य में, वैश्यों की व्यापार में स्पृहा श्रेष्ठ होती है किन्तु क्षत्रियों की स्पृहा तपस्या में एवं ब्राह्मण की स्पृहा विवाद में निन्दित मानी जाती है। ६८।

वशिष्टवचनः—राजाने कहा कि रजोगुणी पुरुष कर्मों के रागवश राजसिक कार्य करता है और रागान्ध होकर रजोगुणी कार्यों में लगा रहता है इसी कारण उसे राजा कहा जाता है। मुने! रागवश मैंने कामधेनु की याचना की थी; अतः मुझ अनुरागी क्षत्रिय का कौनसा अपराध हुआ फिर भी आपके पिता ने महान् बलक्रम से सम्पन्न बहुत से भूपालों का बध कर डाला। इस समय शिशु अवस्था वाले राजकुमार ही आये हैं। आपने सम्पूर्ण पृथ्वी को इक्कीस वार भूपालों से शून्य करने की प्रतिज्ञा की है उसका पालन कीजिये।

महाराजोक्त्युत्तरं युद्धारम्भः—

इत्युक्त्वा विरराम राजमुकुटः स्तूष्णीं हि सर्वोऽभवत्
रामभ्रातृगणः स्वशस्त्रनिपुणो योद्धुं प्रवृत्तोऽभवत् ।
युद्धोदर्कं मुनीन्निरीक्ष्य सहसामत्स्याधिराजोबली
युद्धं कर्तुमनामनागपि भवन् सन्मङ्गले मङ्गलः ।१६९

भावार्थः—रणाङ्गण में इतना कहकर राजमूर्धन्य कार्तवीर्य चुप हो गया। उसके साथ सभी लोग मौन हो गये। तदनन्तर परशुराम जीके सभी भाई अपनी शस्त्रविद्या में निपुण उनकी आज्ञा से शस्त्र धारण किये युद्ध करने के लिये आगे बढ। उन सब मुनीश्वरों को युद्धोन्मुख देखकर युद्ध करना आरम्भ किया जिसमें अहम्भाव की मात्रा न होने पर भी शुभ-माङ्गलिक क्षेत्र में महत्वपूर्ण मङ्गल स्वरूप हो गया।१६९।

मत्स्यराजस्य युद्धवर्णनम्:—

मत्स्येन्द्रः शरजालकञ्च तनुते तं जामदग्न्योच्छिनत्
दिव्यास्त्रं च नृपस्ततोऽक्षिपदितो माहेश्वरं भार्गवाः ।
दिव्यास्त्रेण च भार्गवाश्च सशरं चापं रथिं सारथिं
सन्नाहं च नृपंसमीक्ष्य समरे न्यस्त्वास्त्र शस्त्रं च तम् ।१७०

भावार्थः—मत्स्येन्द्र राजा ने बाणों का जाल बिछाया था और जामदग्न्य मुनिगण ने उस बाणजाल को छिन्नभिन्न कर दिया फिर राजा ने दिव्यास्त्र छोडा मुनिपुत्र भार्गवों ने माहेश्वरास्त्र

को चलाकर उसे शान्त कर दिया एवं पुनः भार्गवगण ने दिव्यास्त्र द्वारा मत्स्यराज के बाणों सहित धनुष, रथ, सारथि एवं उसके कवच की धज्जिएं उड़ादी। इस प्रकार मत्स्यराज को शस्त्रास्त्र हीन देखकर ।१७०।

**हर्षोल्लासभराः समस्तमुनयः शैवं त्रिशूलं दधुः**
**मत्स्येन्द्रं च जिघांसयात्र सहसाऽऽकाशाद्गिरा भाषितम् ।**
**विप्रेन्द्रा ! त्यजतैनमित्थममुधं शूलं शिवस्याधुना**
**मत्स्येन्द्रस्य गलेऽस्ति शैवकवचं दुर्वाससाप्तं पुरा ।१७१।**

भावार्थः--समस्त मुनिपुत्र हर्ष से फूल उठे। फिर मत्स्येन्द्र के वध हेतु शिव त्रिशूल उठाया तो आकाशवाणी हुई कि हे विप्रवरो ! शैव त्रिशूल अमोघ है इसे मत चलाओ" क्योंकि मत्स्यराज के गले में सर्वाङ्ग रक्षक शिवजी का अमोघ कवच है जिसे पूर्वकाल में दुर्वासामहर्षि ने दिया था ।१७१

आकाशवाचः कवचयाचनादेशः—

**संयाच्यैनममोघशैवकवचं प्राणप्रदं भूपति**
**क्षिप्त्वैनं शिवशूलकं नृपवधं कर्तुं तदा युज्यते ।**
**पश्चात्तं परशुस्त्रिशूलमनघं मत्स्येश्वरं प्राक्षिपत् ।**
**तच्छूलं शतधाभवन्नृपममुं संस्पर्शमात्रेण वै ।१७२।**

भावार्थः—अतः पहिले मङ्गल राजा से उस प्राण प्रदाता कवच को मांगलो।" फिर इस त्रिशूल को चलाकर राजा का वध करना युक्ति संगत है। किन्तु परशुराम जी ने त्रिशूल का

प्रहार कर ही दिया था वह त्रिशूल उस राजा के देह से स्पर्श करते ही सौ टुकडे हो गया ।१७२।

अमोघ शिवकवयाचनम्:—

श्रुत्वाऽऽकाशगिरा परश्वधधरः श्रृंगीयतेर्वेषधृक्
संयाच्यात्रनृपं स्वयं सकवचं ब्रह्माण्डजेतुँ क्षयमम् ।
राजासौ हि ददावमोघ कवचं श्रृङ्गीयते रूपिणे
नीत्वा तत्कवचं जघान नृपतिं शूलेन तैनैव हि ।१७३।

भावार्थ:—तब आकाशवाणी सुनकर महापराक्रमी परशुराम ने श्रृङ्गधारी सन्यासी का वेषधारण करके मंगल राजा से कवच की याचना की। राजा ने "ब्रह्माण्ड विजय" नामक अमोघ शिव कवच उनको दे दिया उस कवच को लेकर परशुराम ने पुन त्रिशूल से हो प्रहार किया ।१७३।

मत्स्यराज मङ्गलस्य बधवर्णनम्:—

ब्रह्माण्डे विजयं ह्यमोघकवचं शम्भोर्गृहीत्वा मुनिः
शूलैनैव जघान मत्स्यनृपतिं भूमौ पपाताद्भुतः ।
मत्स्येन्द्रो बलवान् स चन्द्रकुलभूः कान्त्या शशीनां शत
जेता सौ शतचन्द्र भूपतिरभूद् वैकुण्ठ धामातिथिः ।१७४

भावार्थ:—ब्रह्माण्ड में विजयप्रद अमोघ शिवकवच को प्राप्त कर पुनः शिव त्रिशूल से ही मत्स्येश्वर को प्रहार किया तो

मत्स्येन्द्रराज मङ्गल महाबली चन्द्रवंश भूषण अपनी कान्तिसे सैंकडों चन्द्रमाओं को जीतने वाला "शतचन्द्र" नामक राजा भूमि पर गिरा और भगवान् विष्णु के परमधाम वैकुण्ठ का अतिथि बन गया । ७४

## ❀ अथ ब्रह्माण्ड विजय शिवकवचम् ❀

### ❀ नारायण उवाच ❀

कवचं शृणु विप्रेन्द्र शंकरस्य महात्मनः ।
ब्रह्मण्डविजयं नाम सर्वावयवरक्षणम् ।१।

पुरा दुर्वाससा दत्तं मत्स्यराजाय धीमते ।
दत्त्वा षडक्षरं मन्त्रं सर्वपापप्रणाशनम् ।२।

स्थिते च कवचे देहे नास्ति मृत्युश्च जीविनाम् ।
अस्त्रे शस्त्रे जले वह्नौ सिद्धिश्चेन्नास्ति संशयः ।३।

यद् धृत्वा पठनात् सिद्धो दुर्वासा विश्वपूजितः ।
जैगीषव्यो महायोगी पठनाद् धारणाद् यतः ।४।

अश्वमेधसहस्राणि राजसूयशतानि च ।
सर्वाणि कवचस्यास्य कलां नार्हन्ति षोडशीम् ।२१।

कवचस्य प्रसादेन जीवन्मुक्तो भवेन्नरः ।
सर्वज्ञः सर्वसिद्धीशो मनोयायी भवेद् ध्रुवम् ।२२।

इदं कवचमज्ञात्वा भजेद् यः शंकरं प्रभुम् ।
शतलक्षप्रजप्तोऽपि न मन्त्रः सिद्धिदायकः ।२३।

यद् धृत्वा वामदेवश्च देवलश्चयवनः स्वयम् ।
अगस्त्यश्च पुलस्त्यश्च बभूव विश्वपूजितः ।५।

ॐ नमः शिवायेति च मस्तकं मे सदाऽवतु ।
ॐ नमः शिवायेति च स्वाहा भालं सदाऽवतु ।६।

ॐ ह्रीं श्री क्लीं शिवायेति स्वाहा नेत्रे सदाऽवतु ।
ॐ ह्री क्लीं हूं शिवायेति नमो मे पातु नासिकाम् ।७

ॐ नमः शिवाय शान्ताय स्वाहा कण्ठं सदाऽवतु ।
ॐ ह्रीं श्रीं हूं संहारकर्त्रे स्वाहा कर्णौ सदाऽवतु ।८।

ॐ ह्रीं श्रीं पञ्चवक्त्राय स्वाहा दन्तं सदाऽवतु ।
ॐ ह्रीं महेशाय स्वाहा चाधरं पातु मे सदा ।९।

ॐ ह्रीं श्रीं क्लीं त्रिनेत्राय स्वाहा केशान् सदाऽवतु।
ॐ ह्रीं ऐं महादेवाय स्वाहा वक्षः सदाऽवतु ।१०।

ॐ ह्रीं श्रीं क्लीं ऐं रुद्राय स्वाहा नाभिं सदऽवतु ।
ॐ ह्रीं ऐं श्रीं ईश्वराय स्वाहा पृष्ठं सदाऽवतु ।११

ॐ ह्रीं क्लीं मृत्युञ्जयाय स्वाहा भ्रूश्च सदाऽवतु ।
ॐ ह्रीं श्रीं क्लीं ईशानाय स्वाहा पार्श्वं सदाऽवतु ।१२

ॐ ह्रीं ईश्वराय स्वाहा उदरं पातु मे सदा ।
ॐ श्रीं क्लीं मृत्युञ्जयाय स्वाहा बाहु सदाऽवतु ।१३

ॐ ह्रीं श्रीं क्लीं ईश्वराय स्वाहा पातु करौ मम ।
ॐ महेश्वराय रुद्राय नितम्बं पातु मे सदा ।१४।

ॐ ह्रीं श्रीं भूतनाथाय स्वाहा पादौ सदाऽवतु ।
ॐ सर्वेश्वराय सर्वाय स्वाहा सर्वं सदाऽवतु १५।

प्राच्यां मां पातु भूतेश आग्नेय्यां पातु शंकरः ।
दक्षिणे पातु मां रुद्रो नैऋत्यां स्थाणुरेव च ।१६।

पश्चिमे खण्डपरशुर्वायव्यां चन्द्रशेखरः ।
उत्तरे गिरिशः पातु ऐशान्यामीश्वरः स्वयम् ।१७।

ऊर्ध्वे मृडः सदा पातु अधो मृत्युञ्जयः स्वयम् ।
जले स्थले चान्तरिक्षे स्वप्ने जागरणे सदा ।१८।

पिनाकी पातु मां प्रीत्या भक्तं च भक्तवत्सलः ।।

इति ते कथितं वत्स कवचं परमाद्भुतम् ।
दशलक्षजपेनैव सिद्धिर्भवति निश्चितम् १९।

यदि स्यात् सिद्धकवचो रुद्रतुल्यो भवेद् ध्रुवम् ।
तव स्नेहान्मयाऽऽख्यातं प्रवक्तव्यं न कस्यचित् २०।

कवचं काण्वशाखोक्तमतिगोप्यं सुदुर्लभम् ।
अश्वमेधसहस्राणि राजसूयशतानि च ।
सर्वाणि कवचस्यास्य कलां नार्हन्ति षोडशीम् ।२१।
कवचस्य प्रसादेन जीवन्मुक्तो भवेन्नरः ।
सर्वज्ञः सर्वसिद्धीशो मनोयायी भवेद् ध्रुवम् ।२२।
इदं कवचमज्ञात्वा भजेद् यः शंकरं प्रभुम् ।
शतलक्षप्रजप्तोऽपि न मन्त्रः सिद्धिदायकः ।२३।

इति श्रीब्रह्मवैवर्त महापुराणे नारायणनारदसंवादे गणपतिखण्डे ब्रह्माण्ड शिवकवचम् नामपञ्चात्रिशत्तमोऽध्यायः ।

बृहत्बाहोः पुनर्योद्धु राज्ञां प्रेषणम्:—

मत्स्येन्द्रे पतितेऽथ हैहयनृपोह्यन्यान्नृपान्प्राहिणोत्
तेषां वृद्धवलो ऽपि सोमनृपतिर्वैदर्भपो मैथिलः ।
सौराष्ट्रो निषधाधिपो मगधपो योद्धुं समेऽप्याययुः
पर्शूराममिमे महारथिवृताश्चाक्षौहिणीस्तिसृभिः ।१७५

**भावार्थ**—मत्स्यराज मंगल के वैकुण्ठ जानेके वाद हैहयनरेश ने पुनः दूसरे राजाओं को भेजा। उन में वृहद्बल, सोमदत्त, वैदर्भ-नरेश, मिथिलेश्वर, सौराष्ट्रराज निषधेश्वर, और मगधश्वर ये सभी महारथी तीन अक्षौहिणी सेना से युक्त होकर परशुराम के साथ युद्ध करने के लिये युद्ध में आधमके। ७५

युद्ध वर्णनम् —

**राम भ्रातृवरा महाद्भुतबला राज्ञो रणेऽस्त्रैर्व्यधन्**
**ते वीरा शरजालकेन च भृगोर्भ्रातृन् रणे विव्यधुः ।**
**वीक्ष्यैतत्परशुर्पिनाकनिभृतो दीप्ताग्निज्वालोपमः**
**नागास्त्रं च दधे ऽच्छिनच्च गरुडास्त्रेणैव सोमाभिधः ।१७६**

भावार्थः—अद्भुत बलशाली राम के भ्रातृवर्ग ने राजाओं पर एकदम अस्त्रों से वींधना आरम्भ कर दिया और राजपक्षीय वीरों ने वाणों के जाल से परशुराम के भाईयों को बीन्धना आरम्भ कर दिया यह देख पिनाक धनुष को धारण करने वाले परशुराम जी प्रदीप्त अग्निज्वाला के समान क्रोध में आकर नागास्त्र छोडा और सोमदत्त ने गारुडास्त्र से उसे रास्ते में ही काट दिया ।१७६

युद्ध वर्णनम् —

**सोमं शूलवरेण वै स परशुः जघ्ने बलीं पट्टिशैः**
**वैदर्भं किल मुष्टिभिश्च मिथिलं दुर्मुद्गरैः प्राहरत् ।**
**शक्त्या नैषधमेव मागधनृपं पादैरथास्त्रैः बलं**
**हत्वा तान्निखिलान्नृपान्स परशुर्दुद्राव राजेश्वरम् ।१७७।**

भावार्थः—स्वयं परशुराम जी ने शिवशूल द्वारा सोमदत्त पर, गदा से बली (वृहद्बल) को, मुष्टि प्रहार से बिदर्भ नरेश को, बड दुर्गम मुद्गर से मिथिलेश्वर को, शक्ति से निषध नरेश को, पादाघात से मगधनरेश को, अस्त्रों के द्वारा

समग्र सेना को प्रहार करते हुए सब राजाओं को मारकर वे परशुराम भगवान् राजेश्वर हैहय नरेश के पीछे दौड़।

युद्ध वर्णनम्:—

**दृष्ट्वाऽऽयान्तममुँ समं नृपगणं निर्वार्य राजेश्वरं**
**कान्यकुब्ज कलिंगराढ़ियनृपाः सौराष्ट्र वारेन्द्रजाः।**
**वाङ्गाः सौम्य सुगुर्जराधिप महाराष्टाश्च शतशो नृपाः**
**कृत्वा ते शरजालकं च परशुश्छि वा स्वतोऽभ्युत्थितः १७८**

भावार्थ:—परशुराम जी को राजराजेश्वर सहस्रबाहु के पीछे आने देख कर राजगण ने राजेश्वर को पीछे हटाकर कान्यकुब्ज (कनौज), कलिङ्ग, राढदेश, सौराष्ट्र, वारदेश, बंगाल, सौम्य, महाराष्ट्र एवं गुर्जर जातीय सभी देशों के सैंकड़ों-सैंकड़ों राजाओं ने बाणों के जाल बांध दिये परशुराम उन बाणों के जालों को काटकर छिन्न-भिन्न करके सबके सामने आ धमके।१७८।

रणाङ्गणे परशुपौरुषंदृष्ट्वा सुचन्द्र राज्ञ: समागम:—

**त्रिद्युस्तैर्युयुधे स्वतोऽच्छिनदसौ तां द्वादशाक्षौहिणीं**
**परशवस्त्रेण तथासिना खिलबलं शूलेन राज्ञाँ दलम्।**
**तान्दृष्ट्वा निहतान् सुचन्द्रनृपतिः श्रीसूर्यवंशोद्भवः**
**आयातो युधिलक्षभूपसहितः सद्वादशाक्षौहिणी।१७९।**

भावार्थ:—तीन दिन युद्ध करते २ परशुराम जी ने अपने परशु अस्त्र से १२ अक्षौहिणी सेना; खड्ग से वचीखुची सेना; शिव

शूल के द्वारा समस्त राजाओं के समूह को छिन्न-भिन्न कर कर मारडाला। उन सबको मरते देखकर १२ अक्षौहिणी सेना एवं एक लाख राजाओं को लेकर सूर्यवंशीय राजा सुचन्द्र युद्ध में आ धमका ।१७९।

श्री परशुरामेण सुचन्द्रनृपतेर्युद्ध वर्णनम्:—

**स क्रुद्धो युयुधे रणेऽत्र परशुं सिंहं च सिंहो यथा**
**पर्शुर्लक्षनृपं निहत्य तरसा शैवत्रिशूलेन वै ।**
**परश्वस्त्रेण जघान रामभगवान् तां द्वादशाक्षौहिणीं**
**नागास्त्रेण मुनिं च नृपतिर्निहत्य पर्शुः स्वयम् ।१८०।**

भावार्थ—वह सुचन्द्र नरेश परशुराम पर इस प्रकार टूट पड़ा जैसे सिंह पर सिंह झपट मारकर पडता है। परशुराम जी ने शिवत्रिशूल के द्वारा तीव्र वेग से लाख राजाओं को मार कर बारह अक्षौहिणी सेना को भी परशुनामक अपने अस्त्र से मार दिया। नागास्त्र को लेकर सुचन्द्र राजाने परशुराम पर छोडा तो परशुराम जी ने उसे स्वयं निरस्त कर दिया ।१८०।

परशुसुचन्द्रराज्ञोर्युद्ध कौशलम्:—

**पाशं नागमयीं दधौ च परशुस्तार्क्ष्यास्त्रकेनापरः**
**राजासौ परशुं जहास समरे स्वं कौशलं दर्शयन् ।**
**दृष्ट्वैतत्परशुः स्मरन् हरिपदं नारायणास्त्रं दधे**
**वीक्ष्यास्त्रं त्ववरुह्य स्यन्दनवरात्स्तुत्वा प्रणम्य प्रभुम्।१८१**

भावार्थः—फिर परशुराम जी ने नागपाश छोड़ी तो सुचन्द्रनरेश ने गारुडास्त्र से उस को शमन कर दिया एवं राजा सुचन्द्र परशुराम जी का उपहास करने लगा। यह देख परशुराम जी ने नारायण जी के चरणकमलों का ध्यान करते हुए श्री नारायणास्त्र का प्रहार किया उसे देखकर राजा ने अपने रथ से नीचे उतर कर भगवान् की स्तुति कर प्रणाम कर लिया ।१८ ।

परशुरामसुचन्द्रभूपयोर्युद्ध कौशलम्:—

त्यक्त्वा तं प्रणतं ययौ पुनरसौ नारायणस्यान्तिकं
स्वस्त्रेशोऽथ सुविस्मितः स परशुश्चिक्षेप स्वस्त्राण्यपि ।
काली तान्यगृहीत भूपरथगा चिक्षेप शूलं गुरो-
स्तच्छूलं नृपमाल्यतां परिणत कालीं मुनिर्ददृशे ।१८२

भावार्थः—उस राजा को प्रणाम करते देखकर चारों ओर घूमकर राजा को त्याग कर अस्त्रराज पुन नारायण जी के पास चला गया। इसके बाद अत्यन्त विस्मित हुए परशुराम जी ने क्रुद्ध होकर राजा को मारने की इच्छा से शक्ति, मुसल, तोमर, पट्टिश, गदा, परशु इत्यादि अपने सभी विशेष अस्त्रों को अनुसन्धान करके राजा पर छोडा तो वे सभी अस्त्र सुचन्द्र राजा के रथ पर गुप्तरूप में विराजमान भद्रकाली भगवती ने ग्रहण कर लिये। फिर परशुराम जी ने शिवत्रिशूल राजापर छोड़ा तो वहशूल राजा के धारण करने योग्य उत्तम माला बनकर सुचन्द्र नरेश के गले में जा

पड़ी। तो उसी समय परशुराम जी ने राजा के रथ पर विराजमान भद्रकाली भगवती के दर्शन कर लिये ।१८२।

परशुरामस्य भद्रकाली भगवत्या स्तवारम्भ—

**शस्त्रास्त्रं च विहाय पर्शुमिषुधिं स्कन्धात्पिनाकं वरं**
**भक्त्या चानतकन्धरः स परशुर्बद्धाञ्जलिर्वाग्यतः।**
**स्तोतुं तामुपचक्रमे भगवतीं युद्धेश्वरीं मातरं**
**दुर्गां दुर्गतिनाशिनीं गुणमयीं स्वप्नेश्वरीं कालिकाम् ।१८३**

भावार्थः—भगवती के साक्षात्कार होते ही शस्त्रास्त्र, परशवस्त्र, बाणों सहित तूनीर, एवं कन्धेपर से पिनाक धनुष को त्याग कर बद्धाञ्जलि एवं वाणी का संयम करते हुए भगवती, युद्धश्वरी, माता दुर्गा, भक्तों की दुर्दशा को नाश करने वाली गुणों की खान, स्वप्नेश्वरी, भद्रकाली देवी की स्तुति करने लगा ।१८३।

ततो भगवतो ब्रह्मणः परशुरामाय रहस्योपदेशः—

**ब्रह्मा धर्मभृतांवरं तु परशुं ह्यभ्येत्य गुह्यं जगौ**
**त्रैलोक्ये जयकारण हि कवचं काल्या गले भूपतेः।**
**विद्यैषा हि दशाक्षरीह परशो दुर्वाससाप्ता पुरा**
**भिक्षार्थंब्रज भूपतिं स कवचं मन्त्रं च त्वां दास्यति ।१८४**

भावार्थ—इसी के बीच में ब्रह्मा जी धर्मात्माओं में श्रेष्ठ भृगुवंशीय परशुराम के पास आकर उनसे उस रहस्य का वर्णन करने लगे—परशुराम वत्स ! सुचन्द्र राजा की विजय के हेतु भूत

रहस्य यह है; कि पूर्वकाल में महर्षि दुर्वासा ने सुचन्द्र राजा को दशाक्षरी महाविद्या तथा भद्रकाली का परमदुर्लभ कवच प्रदान किया था। वह कवच सम्पूर्ण शत्रुओं का विनाशक त्रिलोकी पर बिजय पाने का कारण है। वह कवच जिसके गले में विद्यमान है उसे आप कैसे जीत सकते हो अतः हे भार्गव ! तुम भिक्षा के लिये इस के पास जाओ। वह राजा धर्मात्मा है मांगने पर वहनिश्चय ही प्राण, कवच, मन्त्र आदि सब कुछ दे डालेगा।

परशुरामस्य संन्यासी वेषेण समन्त्रक कवचयाचनम्:—

**ब्रह्मोक्त्या परशुः सुचन्द्र नृपतिं सन्यासवेषो ययौ**
**भिक्षित्वा कवचं समन्त्रकममुँ युद्धे च परमाद्भुतम् ।**
**त्रैलोक्ये जयकारणं गलगतं पूज्यं च शस्तं च तत्**
**पश्चात्तं शिव शूलकेन परशुर्जघ्ने सुचन्द्रं नृपम् ।१८५**

भावार्थः—ब्रह्माजी के कहने पर परशुराम संन्यासी के वेष में राजा सुचन्द्र के पास गये और समन्त्रक भद्रकाली का कवच लेकर जो युद्ध में अद्भुत चमत्कारी एवं त्रैलोक्य में जय का हेतु होने से गले में पड़ा था उस पूज्य एवं प्रशस्त कवच को मांग कर ले आया उसके पश्चात् शिवत्रिशूल के द्वारा रामजी ने उस सुचन्द्र राजा का वध कर दिया।१८५।

# ❋ अथ भद्रकालि स्तोत्रम् ❋

## ❋ परशुराम उवाच ❋

नमः शङ्करकान्तायै सारायै ते नमो नमः ।
नमो दुर्गतिनाशिन्यै मायायै ते नमो नमः ।१।

नमो नमो जगद्धात्र्यै जगत्कर्त्र्यै नमो नमः ।
नमोऽस्तु ते जगन्मात्रे कारणायै नमो नमः ।२।

प्रसीद जगतां मातः सृष्टिसंहारकारिणि ।
त्वत्पादे शरणं यामि प्रतिज्ञां सार्थकं कुरु ।३।

त्वयि मे विमुखायाञ्च को मां रक्षितुमीश्वरः ।
त्वं प्रसन्ना भव शुभे मां भक्तं भक्तवत्सले ।४।

युष्माभिः शिवलोके च मह्यं दत्तो वरः पुरा ।
तं वरं सफलं कर्त्तुं त्वमर्हसि वरानने ।५।

पर्शुरामस्तवं श्रुत्वा प्रसन्नाभवदम्बिका ।
मा भैरित्येधमुक्त्वा तु तत्रैवान्तरधीयत ।६।

एतद् भृगुकृतं स्तोत्रं भक्तियुक्तश्च यः पठेत् ।
महाभयात्समुत्तीर्णः स भवेदवलीलया ।७।

**स पूजितश्च त्रैलोक्ये त्रैलोक्यविजयी भवेत् ।**
**ज्ञानिश्रेष्ठो भवेच्चैव वैरिपक्षविमर्दक ।८।**

इति श्रीब्रह्मवैवर्त महापुराणे नारायणनारदसंवादे गणपतिखण्डे भद्रकालीस्तोत्रं नाम षट्त्रिंशत्तमोऽध्याय: ।

परशुराम द्वारा की गयी स्तुति को सुनकर भगवती जगदम्बा भद्रकाली का मन प्रसन्न हो गया और "डरोमत" यों कहकर जगदम्बा वहीं अन्तर्धान हो गयीं। इस स्तोत्र का भक्ति-पूर्वक प्रतिदिन पाठ करने वाला अनायास ही महाभय से मुक्त होकर त्रैलोक्य विजयी, ज्ञानियों में श्रेष्ठ होकर शत्रुपक्ष को कुचलने में समर्थ हो जाता है ।

## ❋ अथ त्रैलोक्यजयदा दशाक्षरीविद्या ❋

### ❋ नारद उवाच ❋

**कवचं श्रोतुमिच्छामि ताञ्च विद्यां दशाक्षरीम् ।**
**नाथ त्वत्तो हि सर्वज्ञ भद्रकाल्याश्च साम्प्रतम् ।१।**

### ❋ नारायण उवाच ❋

**शृणु नारद वक्ष्यामि महाविद्यां दशाक्षरीम् ।**
**गोपनीयञ्च कवचं त्रिषु लोकेषु दुर्लभम् ।२।**

**ओं ह्रीं श्रीं क्लीं कालिकायै स्वाहेति च महामन्त्रम् ।**
**दुर्वासा हि ददौ राज्ञे पुष्करे सूर्य्यपर्वणि ।३।**

दशलक्षजपेनैव मन्त्रसिद्धिः कृता पुरा ।
पञ्चलक्षजपेनैव राज्ञा कवचमुत्तमम् ।४।
वभूव सिद्धकवचोऽप्ययोध्यामाजगाम सः ।
कृत्स्नाँ हि पृथिवीं जिग्ये कवचस्य प्रसादतः ।५।

## ॐ अथ त्रैलोक्यजयदं कालिकवचम् ॐ

### ॐ नारद उवाच ॐ

श्रुता दशाक्षरी विद्या त्रिषु लोकेषु दुर्लभा ।
अधुना श्रोतुमिच्छामि कवचं ब्रूहि मे प्रभो ।६।

### ॐ नारायण उवाच ॐ

श्रृणु वक्ष्यामि विप्रेन्द्र ! कवचं परमाद्भुतम् ।
नारायणेन यद्दत्तं कृपया शूलिने पुरा ।७।
त्रिपुरस्य वधे घोरे शिवस्य विजयाय च ।
तदेव शूलिना दत्तं पुरा दुर्वाससे मुने ।८।
दुर्वाससा च यद्दत्तं सुचन्द्राय महात्मने ।
अतिगुह्यतरं तत्त्वं सर्वमन्त्रौघविग्रहम् ।९।
ॐ ह्रीं श्रीं क्लीं कालिकायै स्वाहा मे पातु मस्तकम् ।
क्लीं कपालं सदा पातु ह्रीं ह्रीं ह्रीं इति लोचने ।१०।

ॐ ह्रीं त्रिलोचने स्वाहा नासिकां मे सदावतु ।
क्रीं कालिके रक्ष रक्ष स्वाहा दन्तं सदावतु ।११।
ह्रीं भद्रकालिके स्वाहा पातु मेऽधरयुग्मकम् ।
ॐ ह्रीं ह्रीं क्लीं कालिकायै स्वाहा कण्ठं सदावतु ।१२
ॐ ह्रीं कालिकायै स्वाहा कर्णयुग्मं सदावतु ।
ॐ क्रीं क्रीं काल्यै स्वाहा स्कन्धं पातु सदावतु ।१३।
ॐ क्रीं भद्रकाल्यै स्वाहा मम वक्षः सदावतु ।
ॐ क्रीं कालिकायै स्वाहा मम नाभिं सदावतु ।१४।
ॐ ह्रीं कालिकायै स्वाहा मम पृष्ठं सदावतु ।
रक्तबीजविनाशिन्यै स्वाहा हस्तौ सदावतु ।१५।
ॐ ह्रीं क्लीं मुण्डमालिन्यै स्वाहा पादौ सदावतु ।
ॐ ह्रीं चामुण्डायै स्वाहा सर्वाङ्गं मे सदावतु ।१६।
प्राच्यां पातु महाकाली आग्नेय्यां रक्तदन्तिका ।
दक्षिणे पातु चामुण्डा नैर्ऋत्यां पातु कालिका ।१७।
श्यामा च वारुणे पातु वायव्यां पातु चण्डिका ।
उत्तरे विकटास्या च ऐशान्यां साट्टहासिनी ।१८।
ऊर्ध्वं पातु लोलजिह्वा मायाद्या पात्वधः सदा ।
जले स्थले चान्तरिक्षे पातु विश्वप्रसूः सदा ।१९।

इति ते कथितं वत्स सर्वमन्त्रौघविग्रहम् ।
सर्वेषां कवचानाञ्च सारभूतं परात्परम् ।२०।

सप्तद्वीपेश्वरो राजा सुचन्द्रोऽस्य प्रसादतः ।
कवचस्य प्रसादेन मान्धाता पृथिवीपतिः ।२१।

प्रचेता लोमशश्चैव यतः सिद्धो बभूव ह ।
यतो हि योगिना श्रेष्ठः सौभरिः पिप्पलायनः ।२२।

यदि स्यात् सिद्धकवचः सर्वसिद्धीश्वरो भवेत् ।
महादानानि सर्वाणि तपांसि च व्रतानि च ।२३।

निश्चितं कवचस्यास्य कलां नार्हन्ति षोडशीम् ।।

इति श्रीब्रह्मवैवर्त्ते महापुराणे गणपतिखण्डे नारायणनारदसंवादे
कालीकवचं नाम सप्तत्रिंशत्तमोऽध्यायः ।

शिवशूलेन सुचन्द्रराजवधः—

शूलाघातविदारिते नृपहृदि श्रीरामशब्दोद्भवे
तज्ज्योतिश्च सुचन्द्रराजहृदयाद्रामाननं प्राविशत् ।
वीक्ष्यैतत्तु सुचन्द्रभूपतनयोऽगात्पुष्कराक्षोयुधि
साष्टाङ्गं प्रणनाम भार्गववरं त्र्यक्षौहिणी संवृतः ।१८६

भावार्थः—शिवशूल के द्वारा राजा सुचन्द्र के हृदय विदीर्ण हो
जाने पर वहां से "श्रीराम" ऐसा शब्द होते ही एक ज्योति

पैदा हुई और भगवान् परशुराम के मुख में समा गयी। इस प्रकार की अद्भुत घटना को देखकर सुचन्द्र का पुत्र पुष्कराक्ष तीन अक्षौहिणी सेना से युक्त होकर युद्ध में जा पहुंचा और उसने भृगुवंशीय भगवान् परशुराम जी को साष्टाङ्ग प्रणाम की ।१८६।

**परशुराम भ्रातृवरैः सह पुष्कराक्षस्य युद्धम्:—**

**श्रीलक्ष्म्याः कवचन्धरः स्मरनिभस्त्रैलोक्य विजयी स्वयं**
**दृष्ट्वा तं परशोः सहोदरवरा योद्धुं रणं प्राविशन्।**
**राजेन्द्रः शरजालकैर्व्यजघनत्ते चिच्छिदुर्लीलया**
**बाणैः स्यन्दनमस्य पञ्चभिरमी तत्सारथिं पञ्चभिः १८७**

**भावार्थ**—त्रैलोक्य विजयी श्रीलक्ष्मी के कवच को धारण किये पुष्कराक्ष साक्षात्कामदेव स्वरूप ही प्रतीत हो रहा था। उसको देखकर भार्गव के भ्रातृवर्य युद्ध करने के लिये रणाङ्गण में प्रविष्ट हुए। राजेन्द्र पुष्कराक्ष ने उन पर बाणों का जाल बिछा दिया। किन्तु परशुराम के भाइयों ने खेल २ में उस जाल को रास्ते में ही काट दिया। फिर पांच बाणों से रथ, पांच से सारथि ।१८७।

**अश्वान्पंक्तिशरैर्धनुश्च नवभिस्तूर्णं शरैःश्चिच्छिदु-**
**स्तद्भ्रातृञ्छिव शूलतो मुनिवरा जघ्नुश्च त्र्यक्षौहिणीम्।**
**वीरास्ते नृपतिं जिघांसितुमनाः शूलास्त्वकं चिक्षिपुः**
**तच्छूलं नृपतेर्गलेऽभवदसौ माला च पद्माक्षजा ।१८८।**

भावार्थ:—दशबाणों से रथ के अश्वों, नौ से तूणीर को काट गिराय। तत्पश्चात् मुनिजनों ने राजा के भाइयों और तीन अक्षौहिणी सेना को शिवशूल से मार दिया। तदनन्तर उनवीरों ने राजा को मारने की इच्छा से शूलास्त्र छोडा तो वह त्रिशूल पद्माक्षमाला बनकर राजा के गले में जा पड़ा ।१८८।

भार्गवपुष्कराक्ष युद्धवर्णनम्:—

**कोपेन ज्वलदग्नयो द्विजवराः शक्तिं गदां मुद्गरं**
**भूशुण्डीं परिघं च चिक्षिपुरथो राज्ञो वपुःस्पर्शनात् ।**
**पेतुश्चूर्णमयानि विस्मितइव भ्रातृगणो भार्गवः**
**शस्त्रास्त्राणि धनू रथादि पृतना राजार्जुनः प्राहिणोत् ।१८९**

भावार्थ—फिर कोपाग्नि ज्वाला से प्रदीप्त भार्गवों ने शक्ति, गदा, मुद्गर, भूशुण्डी और परिघ चला दिये किन्तु पुष्कराक्ष राजा के देह को छूते ही सभी चूर-चूर होकर धराशायी हो गये। उधर राजा सहस्रबाहु अर्जुन ने पुनः शस्त्रास्त्र, धनुः, रथ आदि सेना सहित समस्त युद्ध के साधन रणाङ्गन मे भेज दिये ।१८९।

**आरुह्यान्यरथं स पुष्कर नृपो धोरेषुजालं व्यधात्—**
**चिच्छेदैषव जालकं मुनिगणो राजाक्षिपत्स्वापनम् ।**
**निद्रार्तोरणमध्यगो द्विजगणो रामः ससंज्ञं व्यधात्**
**चिक्षेपाथ परश्वधं स परशुः भूपं निहन्तुं मनाः ।१९०।**

भावार्थः—उसके पश्चात् पुष्कराक्ष ने दूसरे रथ पर चढ कर घोर शरजाल बना दिया मुनिबालकों ने उस शरजाल को काट दिया फिर राजा ने स्वापनास्त्र फैंका विप्रगण को निद्रासक्त कर दिया परशुराम ने उनको होश में लाया। उस राजा को मारने के लिये भगवान् परशुराम जी ने परश्वस्त्र फैंका ।१९०।

**छित्वा राजकिरीटकञ्च परशुः भूमौ पपाताश्वसौ**
**जग्राहाथ परश्वधं स भगवान् चिक्षेप शूलं गुरोः ।**
**छित्वा तन्नृप कुण्डलं पुनरपि प्राप्तं शिवस्यान्तिकं**
**ब्रह्मास्त्रं च समन्त्रकं मुनिवरो राजा तदावारयत् ।१९१।**

भावार्थः—किन्तु राजा के मुकुट को काट कर परशु भूमिपर गिर पड़ा। उसके पश्चात् भगवान् राम ने अपने गुरु का दिया शिवत्रिशूल फैंका वह भी एकमात्र राजा के कर्ण कुण्डलमात्र को काटकर शिवलोक में शिवजी के पास चला गया। ब्रह्मास्त्र परशुराम ने छोड़ा तो उसे भी राजा ने लीलामात्र में ही शमन कर दिया ।

**राजासौ परशुँ जिघाँसितु मनाः कृत्वेषु जालं महत्**
**छित्वा तच्छरजालकं मुनिरसौ त्रैयम्बकं चास्मरत् ।**
**स्तुत्वा पाशुपतं दधे मुनिवरः विप्रोऽद्भुतश्चोत्थितो**
**विष्णुर्ब्राह्मणवेषधृक स्वयमसौ रामान्तिकं प्राप्तवान् ।१९२**

**भावार्थ**—राजा ने परशुराम को मारने की इच्छा से शरजाल छोडा परशुराम जी ने उसे काट गिराया। फिर त्र्यम्बकेश्वर भगवान् को स्मरण कर उसकी स्तुतिकर पाशुपतास्त्र को उठाया ही था तो अकस्मात् सामने ब्राह्मण प्रकट हो गया। भगवान् विष्णु स्वयं विप्रवेषधारी स्वयं प्रकट होकर राम के पास आकर बोले —।

प्रिय भार्गव ! तूं तो समस्त ज्ञानियों में श्रेष्ठ है मनुष्य को मारने के लिये पाशुपतास्त्र छोडने पर उतारु हो गया हैं सुदर्शन भगवान् कृष्ण का अस्त्र है वह समस्त शस्त्रों को कुचल देने वाला है। पाशुपत भगवान् शंकर का है सुदर्शन भगवान् विष्णु का है ये दोनों त्रैलोक्य के सभी अस्त्रों में प्रधान हैं। ब्रह्मन् इसको त्याग दें और मेरे वचन की ओर ध्यान दें। जिस ढंग से राजा पुष्कराक्ष को आप जीत सकें एवं सहस्राक्ष को आप सहज में जीत लें जो संसार में अजेय हैं वह ढंग सावधान होकर सुने। महालक्ष्मी का कवच त्रैलोक्य में दुर्लभ है वह देवर्षि सनत्कुमार जी का दिया हुआ पुष्कराक्ष के गले में बान्धा है एवं महर्षिदुर्वासा का दिया हुआ परम दुर्गतिनाशिनी दुर्गा का कवच इसके पुत्र सहस्राक्ष ने दक्षिण बाहु में बान्धा है इस लिये ये दोनों विश्व-विजेता हैं। देह में कवच रहते उन दोनों को तीनों लोकों में कौन जीत सकता है। मुने ! मैं तुमारी प्रतिज्ञा सफल करने के निमित्त उन दोनों के समीप मांगने के लिये स्वयं जाऊंगा और उन दोनों से कवचों की याचना करूंगा। यह सुन परशुराम का मन भयभीत हो गया। तब खिन्न हृदय से उस वृद्ध ब्राह्मण से बोले-महाप्राज्ञ !

ब्राह्मण रूपधारी आप कौन हैं ? अपना परिचय देकर उन राजाओं के पास जाइये। यह सुन हंसते हुए ब्राह्मण ने कहा— 'मैं विष्णु हूं'' यों कहकर राजाओं के पास कवच याचना के लिये चले गये। भगवान् की माया से मोहित होकर पुष्कराक्ष एवं सहस्राक्ष दोनों ने अपने-अपने कवच विष्णु को दान कर दिये। भगवान् विष्णु उन कवचों को लेकर वैकुण्ठ में चले गये।

## ॐ अथ सर्वसंपत्प्रद लक्ष्मीकवचम् ॐ

### ॐ नारायण उवाच ॐ

सर्वसम्पत्प्रदस्यास्य कवचस्य प्रजापतिः ।
ऋषिश्छन्दश्च वृहती पद्मालया स्वयम् ।१।
धर्मार्थकाममोक्षेषु विनियोगः प्रकीर्तितः ।
पुण्यबीजं च महतां कवचं परमाद्भुतम् ।२।
ॐ ह्रीं कमलवासिन्यै स्वाहा मे पातु मस्तकम् ।
श्रीं मे पातु कपालं च लोचने श्रीं श्रियै नमः ।३।
ॐ श्रीं श्रियै स्वाहेति च कर्णयुग्मं सदावतु ।
ॐ ह्रीं श्रीं क्लीं महालक्ष्म्यै स्वाहा मे पातु नासिकां ।४
ॐ श्रीं पद्मालयायै च स्वाहा दन्तं सदाऽवतु ।
ॐ श्रीं कृष्णप्रियायै च दन्तरन्ध्रं सदाऽवतु ।५।

ॐ श्रीं नारायणेशायै मम कण्ठं सदाऽवतु ।
ॐ श्रीं केशवकान्तायै मम स्कन्धं सदाऽवतु ।६।
ॐ श्रीं पद्मनिवासिन्यै स्वाहा नाभिं सदाऽवतु ।
ॐ ह्रीं श्रीं संसारमात्रे मम वक्षः सदाऽवतु ।७।
ॐ श्रीं श्रीं कृष्णकान्तायै स्वाहा पृष्ठं सदाऽवतु ।
ॐ ह्रीं श्रीं श्रियै स्वाहा मम हस्तौ सदाऽवतु ।८।
ॐ श्रीं निवासकान्तायै मम पादौ सदाऽवतु ।
ॐ ह्रीं श्रीं क्लीं श्रियै स्वाहा सर्वाङ्गं मे सदावतु।९।
प्राच्यां पातु महालक्ष्मीराग्नेय्यां कमलालया ।
पद्मा मां दक्षिणे पातु नैर्ऋत्यां श्रीहरिप्रिया ।१०।
पद्मालया पश्चिमे मां वायव्यां पातु श्रीः स्वयम् ।
उत्तरे कमला पातु ऐशान्यां सिन्धुकन्यका ।११।
नारायणेशी पातूर्ध्वमधो विष्णुप्रियाऽवतु ।
सततं सर्वतः पातु विष्णुप्राणाधिका मम ।१२।
इति ते कथितं वत्स सर्वमन्त्रौघविग्रहम् ।
सर्वैश्वर्यप्रदं नाम कवचं परमाद्भुतम् ।१३।
सुवर्णपर्वतं दत्त्वा मेरुतुल्यं द्विजातये ।
यत् फलं लभते धर्मी कवचेन ततोऽधिकम् ।१४।

गुरुमभ्यर्च्य विधिवत् कवचं धारयेत्तु यः ।
कण्ठे वा दक्षिणे बाहौ स श्रीमान् प्रतिजन्मनि ।१५।

अस्ति लक्ष्मीर्गृहे तस्य निश्चला शतपूरुषम् ।
देवेन्द्रैश्चासुरेन्द्रैश्च सोऽवध्यं निश्चितं भवेत् ।१६।

स सर्वपुण्यवान् धीमान् सर्वयज्ञेषु दीक्षितः ।
स स्नातः सर्वतीर्थेषु यस्येदं कवचं गले ।१७।

यस्मै कस्मै न दातव्यं लोभमोहभयैरपि ।
गुरुभक्ताय शिष्याय शरणाय प्रकाशयेत् ।१८।

इदं कवचमज्ञात्वा जपेल्लक्ष्मीं जगत्प्रभुम् ।
कोटिसंख्यप्रजप्तोऽपि न मन्त्रः सिद्धिदायकः ।१९।

इति श्रीब्रह्मवैवर्त महापुराणे नारायणनारदसंवादे गणपतिखण्डे भद्रकालीस्तोत्रं नाम अष्टत्रिंशत्तमोऽध्यायः ।

## श्री दुर्गाकवचम्ः—

### ❀ नारायण उवाच ❀

शृणु नारद वक्ष्यामि दुर्गायाः कवचं शुभम् ।
श्रीकृष्णेनैव यद्दत्तं गोलोके ब्रह्मणे पुरा ।१।

ब्रह्मा त्रिपुरसंग्रामे शंकाराय ददौ पुरा ।
जघान त्रिपुरं रुद्रो यद् धृत्वा भक्तिपूर्वकम् ।२।

हरो ददौ गौतमाय पद्माक्षाय च गौतमः ।
यतो बभूव पद्माक्षः सप्तद्वीपेश्वरो जयी ।३।

यद् धृत्वा पठनाद ब्रह्मा ज्ञानवान् शक्तिमान् भुवि ।
शिवो बभूव सवज्ञो योगिनां च गुरुर्यतः ।४।

शिवतुल्यो गौतमश्च बभूव मुनिसत्तमः ।।

ब्रह्माण्डविजयस्यास्य कवचस्य प्रजापतिः ।
ऋषिश्छन्दश्च गायत्री देवी दुर्गतिनाशिनी ।५।

ब्रह्माण्डविजय चैव विनियोगः प्रकीर्तितः ।
पुण्यतीर्थं च महतां कवचं परमाद्भुतम् ।६।

ॐ ह्रीं दुर्गतिनाशिन्यै स्वाहा मे पातु मस्तकम् ।
ॐ ह्रीं मे पातु कपालं च ॐ ह्रीं श्रीमिति लोचने ।७

पातु मे कर्णयुग्मं च ॐ दुर्गायै नमः सदा ।
ॐ ह्रीं श्रीमिति नासां मे सदा पातु च सर्वतः ।८।

ह्रीं श्रीं हूमिति दन्तानि पातु क्लीमोष्ठयुग्मकम् ।
क्रीं क्रीं क्रीं पातु कण्ठं च दुर्गे रक्षतु गण्डकम् ।९।

स्कन्धं दुर्गविनाशिन्यै स्वाहा पातु निरन्तरम् ।
वक्षो विपद्विनाशिन्यै स्वाहा मे पातु सर्वतः ।१०।

दुर्गे दुर्गे रक्षणीति स्वाहा नाभिं सदावतु ।
दुर्गे दुर्गे रक्ष रक्ष पृष्ठं मे पातु सर्वतः ।११।

ॐ ह्रीं दुर्गायै स्वाहा च हस्तौ पादौ सदावतु ।
ॐ ह्रीं दुर्गायै स्वाहा च सर्वाङ्गं मे सदावतु ।१२।

प्राच्यां पातु महामाया आग्नेय्यां पातु कालिका ।
दक्षिणे दक्षकन्या च नैर्ऋत्यां शिवसुन्दरी ।१३।

पश्चिमे पार्वती पातु बाराही बारुणे सदा ।
कुबेरमाता कौबेर्य्यामैशान्यामीश्वरी सदा ।१४।

ऊर्ध्वे नारायणी पातु अम्बिकाधः सदावतु ।
ज्ञाने ज्ञानप्रदा पातु स्वप्ने निद्रा सदावतु ।१५।

इति ते कथितं वत्स सर्वमन्त्रौघविग्रहम् ।
ब्रह्माण्डविजयं नाम कवचं परमाद्भुतम् ।१६।

सुस्नातः सर्वतीर्थेषु सर्वयज्ञेषु यत् फलम् ।
सर्वव्रतोपवासे च तत् फलं लभते नरः ।१७।

गुरुमभ्यर्च्य विधिवद् वस्त्रालंकारचन्दनैः ।
कण्ठे वा दक्षिणे बाहौ कवचं धारयेत्तु यः ।१८।

स च त्रैलोक्यविजयी सर्वशत्रुप्रमर्दकः ।।

इदं कवचमज्ञात्वा भजेद् दुर्गतिनाशिनीम् ।
शतलक्षप्रजप्तोऽपि न मन्त्रः सिद्धिदायकः ।१९।

कवचं काण्वशाखोक्तमुक्तं नारद सुन्दरम् ।
यस्मै कस्मै न दातव्यं गोपनीयं सुदुर्लभम् ।२०।

इति श्रीब्रह्मवैवर्त्ते महापुराणे गणपतिखण्डे नारायणनारदसंवादे ब्रह्माण्ड विजयं दुर्गाकवचं नाम एकोनचत्वारिंशत्तमोऽध्यायः

पुष्कराक्षसहस्राक्षयोर्वधः—

श्रीरामः कवचोज्झितं नृपमपि श्री पुष्कराक्षं युधि
नाना कौशल दर्शनेऽपि निपुणः सप्ताहमात्रं युधन् ।
ब्रह्मास्त्रेण सयत्नतोऽपि निहतो भूम्यां सपुत्रोऽपतद्
दृष्ट्वैतच्च सहस्रबाहुनृपतिरारुह्य हैमं रथम् ।१९३।

भावार्थ —दोनों पितापुत्र पुष्कराक्ष और सहस्राक्ष के कवच रहित हो जाने पर भी पुष्कराक्ष को नाना प्रकार के युद्ध कौशल दिखाने में निपुण होते हुए भी सप्ताह पर्यन्त युद्ध करते हुए ब्रह्मास्त्र के द्वारा महात्मा पुष्कराक्ष अपने पुत्र सहस्राक्ष सहित धराशायी हो गया। यह देखकर सहस्रबाहु महाराज सुवर्णमय रथ पर सवार होकर।१९३।

नानास्त्रं परितो विधाय समरे लक्षद्विकाक्षौहिणीं
रत्नालङ्कृतिभूषितैर्नृपवरैः कोट्यैकसंख्यान्वितैः ।

**श्रीरामः समरे ददर्श नृपति न्वीषत्स्मितं सुन्दरं**
**दृष्टा तं मुनिमर्जुनो निजरथात्सद्योऽवरुह्यानुगैः ।१६४।**

भावार्थः—अनेक प्रकार के अस्त्रादियों को सब ओर रखकर दो लाख अक्षौहिणी सेना लेकर अनेक प्रकार के रत्नादियों से सहित एक करोड़ अलङ्कारों से भूषित श्रेष्ठ राजाओं के साथ मुस्कराते हुए अति सुन्दर राजा को रणक्षेत्र में परशुराम जी ने राजा सहस्रबाहु को देखा। और राजा ने परशराम जी को देखकर अनुयायी राजाओं सहित तुरन्त रथ से नीचे उतर कर ।१९४।

**नत्वा राममथारुरोह नृपतिः स्वं स्वं रथं राजभिः**
**स्वर्याहि स्वनुयायिभिर्नरपते ! रामो ददौ स्वऽऽशिषम् ।**
**युद्धन्तूभयसेनयोश्च तुमुलं रामाग्रजा दुद्रुवुः**
**सर्वाङ्गक्षतदिक्षता नृपतिना सम्पीडिता संयुगे ।१९५।**

भावार्थः—श्रीराम भगवान् को नमस्कार करके राजाओं सहित अपने २ रथ पर चढ गए। उनको नमस्कार करते हुए राजा को राम जी ने "हे नरपते ! अपने अनुयायी राजाओं सहित सीधे वैकुण्ठधाम में जाओ। ऐसी समयोचित आशीर्वाद दी। फिर इसी के साथ दोनों सेनाओं का घोर युद्ध होना प्रारम्भ हुआ और राम के भ्रातृवर्ग युद्ध में राजा द्वारा पीडित सर्वाङ्ग घायल होकर भाग गये ।१९५।

**भूपस्यैषवज्रालकेन परशुः शस्त्रज्ञचूडामणिः**
**स्वात्मानं निजभूपयोश्च निखिलं सैन्यं न द्रष्टुं प्रभुः ।**
**आग्नेयास्त्रमथाक्षिपद् भृगुवरो जज्वाल युद्धावनी**
**राजा वारुणमक्षिपद् रण भुवं शान्तं व्यधाद्धर्मवित् ।१९६।**

**भावार्थ:**– राजा के बाण समूह से आच्छादित होने के कारण शस्त्रविद्या शिरोमणि परशुराम को अपनी तथा राजा की सेना भी नहीं दिखाई दे रही थी। फिर तो परस्पर घोर दिव्यास्त्रों का प्रयोग होने लगा परशुराम जी ने आग्नेयास्त्र छोड़ा तो रणभूमि में अग्निज्वालाए धधकने लगी। राजा ने वारुणास्त्र से उसे शान्त कर दिया ।१९६।

**गान्धर्वं शिलसर्पयुग्भृगुवरश्चिक्षेप युद्धावनौ**
**वायव्येन नृपो निवार्य परशुश्चिक्षेप नागास्त्रकम् ।**
**राजा गारुडजेन वारयतितन्माहेश्वरं भार्गवो**
**भूपो वैष्णवजेन वारणपरः पर्शुश्च ब्रह्मास्त्रकम् ।१९७।**

**भावार्थ:**—परशुराम जी ने शिलासर्पों सहित गान्धर्वास्त्र छोड़ा राजा ने वायव्यास्त्र से उसे शान्त कर दिया। फिर परशुराम जी ने नागास्त्र छोड़ा राजा ने गारुडास्त्र से उसे वारण किया। फिर परशुराम जी ने माहेश्वरास्त्र छोड़ा तो राजा ने वैष्णवास्त्र से उसे वारण कर दिया। फिर परशुराम जी ने ब्रह्मास्त्र छोड़ा १९७

**ब्रह्मास्त्रेण निवार्य वै नरपतिर्दत्ताप्तशूलं दधे**
**पर्शूरामवधाय मन्त्रसहितं सत्कोटिसूर्यप्रभम् ।**
**दुर्वार्यं प्रलयाग्निवत्तदखिलं रामोपरि प्राहरत्**
**मूर्च्छामाप भृगुः पपात धरणौ सद्योर्हरि संस्मरन् ।१९८**

भावार्थ —ब्रह्मास्त्र से उसे निरस्तकर राजा ने दत्तात्रेय से प्राप्त अमोघशूल को यथाविधि मन्त्रोच्चारणपूर्वक परशुराम पर छोड़ दिया उस सैंकडों सूर्यों के समान प्रभावशाली एवं प्रलयाग्नि की शिखा के समान शूल के लगते ही परशुराम जी हरिस्मरण करते हुए धराशायी हो गये ।१९८।

**आजग्मुर्विधिविष्णुशङ्करसुराः सर्वे दयासागराः**
**सद्यः शंकरलीलया स परशुः संज्ञान्वितश्चोत्थितः ।**
**भक्त्यासौ प्रणनाम लज्जितधिया नम्रात्मग्रीवो भृगु.**
**भक्त्या नम्रशिरोऽधरो नृपवरो नत्वा सुरेशान् रणे ।१९९**

भावार्थः—फिर ब्रह्मा विष्णु शिव तीनों दयासिन्धु देवगण आ पहुंचे। भगवान् शंकर जी अपार लीलाधारी ने परशुराम जी को पुनर्जीवनदान दे दिया मूर्छानिवृत्त होते ही उठकर लज्जित हो भक्ति से विनयपूर्वक सिर झुका कर परशुराम जी ने देवताओं को प्रणाम किया एवं राजा सहस्रबाहु ने भी युद्ध में उपस्थित देवताओं को सिर झुकाकर सादर प्रणाम किया ।१९९।

श्री दत्तात्रेयस्य रणे समागमः—

दत्तात्रेयगुरुस्तदैव भगवान् भक्तोपकारप्रियः
शिष्यं रक्षितुमागतो रणभुवि श्रीकार्तवीर्यस्मृतः ।
क्रुद्धोऽसौ परशुः स्मरन् गुरुवरं जग्राह पाशुपतं
दत्तप्रत्तदृशा बभूव जडवद् रामोऽद्भुतं ददृशे ।१००।

भावार्थ—इसी समय वहां युद्ध स्थल में भक्तवत्सल कृपालु भगवान् दत्तात्रेय राजा कार्तवीर्य के स्मरण करते ही शिष्य की रक्षा करने के लिये आ पहुंचे। फिर परशुराम ने क्रुद्ध होकर पाशुपतास्त्र हाथ में लिया; परन्तु दत्तात्रेय की दृष्टि पड़ने से वे रणभूमि में स्तम्भित हुए परशुराम जी ने अद्भुत चमत्कार देखा कि ।१००

परशुरामस्याद्भुत लीला दर्शनम्—

नूत्नाम्भोदरुचिं करेण मुरलीं पीयूषयन्तं स्वरैः
गोपैः स्वैः शतशोवृतं स्मितिपरं नेकैः श्रितं पार्षदैः ।
श्री ब्रह्माच्युतशङ्करैः स्तुतमहो संरक्षमाणं नृपं
भ्रामन्तं स्व सुदर्शनं दृशि भृगुः श्रीगोपकृष्णं व्यधात्।१११

भावार्थः—जिनकी शरीर की कान्ति नूतन जलधर के सदृश हैं; जो हाथ में वंशी लिये बजा रहे हैं; सैकड़ों गोप जिनके साथ हैं, जो मुस्कराते हुए प्रज्वलित सुदर्शन चक्र को निरन्तर घुमा रहे हैं, और अनेकों पार्षदों से घिरे हुए हैं

एवं ब्रह्मा विष्णु और महेश्वर जिनका स्तवन कर रहे हैं; वे गोपवेषधारी भगवान् श्रीकृष्ण युद्ध क्षेत्र में राजा की रक्षा कर रहे हैं ।१०१।

आकाशवाणी :—

**जाता वागशरीरिणी प्रकृतितस्तत्रान्तरे ह्यद्भुता**
**दत्तं दत्तवरेण सिद्धकवचं कृष्णस्य परमात्मनः ।**
**राज्ञो दक्षिणबाहुगतं विलसितं सद्रत्नयन्त्रान्वितं**
**शम्भौ भिक्षित एव दिव्यकवचे राज्ञोवधः सम्भवः ।१०२**

भावार्थः—इसी समय आकाशवाणी हुई कि;—दत्तात्रेय भगवान् जी के द्वारा दिया हुआ परमात्मा श्रीकृष्ण का कवच उत्तम रत्न की गुटिका के साथ राजा की दाहिनी भुजापर बन्धा हुआ है। अत: योगियों के गुरु शङ्कर भिक्षा के रूप से जब उस को मांग लेंगे तभी परशुराम राजा का वध करने में समर्थ हो सकेंगे ।१०२।

विप्रवेषेण शङ्कर भगवत: राज्ञ: कवचयाचनम्:—

**श्रुत्वा वागशरीरिणीं स भगवान् विप्रावतारीश्वरो-**
**भैक्ष्येणाप्त सहस्रबाहुकवचं रामाय साऽऽशीर्ददौ ।**
**ये देवाः कवचप्रभाववशतो युद्धे समभ्यागता-**
**स्ते देवाः कवचावतारणविधौ स्वं स्वं हि स्थानं ययुः १०३**

भावार्थः—आकाशवाणी सुनकर भगवान् विप्रवेष में मानो विप्रावतार धारण कर शिवजी महाराज ने सहस्रबाहु से कवच की

भिक्षा मांगकर आशीर्वाद सहित परशुराम जी को दे दिया। जो जो देवता कवच प्रभाव से युद्ध में राजा की रक्षार्थ उपस्थित थे वे सभी देवता कवच के उतार ने के समय ही अपने-अपने स्थानों को चले गये ।१०३।

आकाशवाणी:—

धर्मात्मन् ! कृतवीर्य नन्दन ! नृप ! प्राज्ये ऽधिराज्ये भटैः
प्राप्तं राजपराजये बहुधनं सद्रत्नस्वर्णादिकम् ।
निक्षिप्तं पथि भूतले समधिकं सर्वत्र भूमण्डले
प्रेष्ठास्ते जयकांक्षिणो ऽमरभटायुद्धे हताः स्वर्गताः ।१०४

भावार्थः—हे धर्मात्मा कृतवीर्यनन्दन महाराज ! तुमारे अखण्ड विशाल राज्य में होने वाले युद्ध विजेता योधाओं को पराजित करके उत्तम रत्न सुवर्णादि अधिक से अधिक धन प्राप्त किया आपकी राजधानी पहुंचाने में असमर्थ होने पर वह सभी धन रास्ते में ही जमीन खोद कर गाड़ते गये ऐसे हो समस्त भूमण्डल में धन को भूमि के अर्पण करते गये वे सभी तेरे प्रियाति प्रिय योद्धा तुमारी विजय के अभिलाषी युद्ध में लड़ते २ अमरयोधागण मर कर वीरगति को प्राप्त करके। स्वर्ग के अतिथि बन गये ।१०४।

शत्रूणां विलयं हि हैहयकुले ये ते भटैर्निर्जिता
स्ते दीना धनहीनजीवननृपाः प्राप्ता महादुर्गतिम् ।
तैर्ज्ञातं किल यज्ञतो हि धनवान् यज्ञैश्च श्रेष्ठी भवेत्
तैरष्टादशभिश्च भवेत्क्षितिपतिः यष्ट्वा शतं देवराट् ।१०५

भावार्थ.—हे राजन् ! जो शत्रु राजगण तुमारे महारथी योधाओं ने जीत लिये थे वे शत्रु की कोटि से मुक्त होने के लिये अपनी रक्षा हेतु हैहय राजवंश के साथ हिलमिल गये वे दीन धन-हीन जीवन युक्त राजा लोग महादुर्गति को प्राप्त हुए। यह दुर्दशा भोगते हुए अपने आपको उठाने का साधन ज्ञात किया कि; मामूली यज्ञ भी मनुष्य करे तो वह धनवान् कहलाता है दो से अधिक यज्ञ करे तो श्रेष्ठी सेठ) लखपति कहलाता है। अठारह यज्ञ करे तो जागीरदार, जमीनदार, देव, भूमिपति, या राजा कहलाता है सौ यज्ञ करे तो देवराज इन्द्र कहलाता है ।१०५

**संस्कारा लघुयज्ञकोटि गणिता श्रेष्ठोऽत्र पाणिग्रहः**
**श्राद्धं वै पितृयज्ञ शास्त्र गदितं राज्याभिषेको महान् ।**
**श्रौतस्मार्तमखादयो बहुविधा यज्ञाश्च याच्ञा ऋणैः**
**सौत्रामण्यमखाश्वमेध भणिताः सर्वेऽर्थ साध्या इमे ।१०६**

भावार्थः—१६ संस्कार लघुकोटि के यज्ञों में गिने गये हैं उन में विवाह १६ यज्ञों में श्रेष्ठ है। मृत पुरुष के उद्धार हेतु किये जाने वाला श्राद्ध पितृयज्ञ माना जाता है। राज्याभिषेक महायज्ञ माना गया है। श्रौतस्मार्तादि बहुत से देवयाग है जो मांग कर या ऋणादि द्वारा भी किये जा सकते हैं। सौत्रामण्य, राजसूय, अश्वमेधादि सभी बहुद्रव्य साध्य यज्ञ हैं, जो राजा, महाराजा, चक्रवर्ती द्वारा ही किये जा सकते हैं ।१०६।

**श्रौतस्मार्तमखप्रियैस्त्वदीयकुलजैः धर्मात्मभीराजभिः**
**नानायज्ञविधानमाननिपुणैर्दत्तं भृगुभ्यो धनम् ।**
**एते वंशपुरोहिता गुरुवरा आचार्यवर्याच्चिता**
**रत्नाद्यैर्धनराशिभिश्च भृगवश्चान्येऽप्यसंख्या द्विजाः ।१०७**

**भावार्थः**—हे राजन् ! आपके कुल में उत्पन्न होने वाले धर्मात्मा राजाओं ने अनेक प्रकार के यज्ञों के विधान और उनकी वेदिकाओं मानादि में निपुण लोगों को साथ लेकर भृगुवंशियों को बहुत धन दिया । ये भृगुवंशीय ब्राह्मण देवता ही आपके पुरोहित गुरुवर आचार्यों में श्रेष्ठ मानकर उनको पूज्य एवं लब्ध प्रतिष्ठ माना जाता था । रत्नादि शब्द से रत्न सुबर्ण गो गज, अश्व, भूभागादि के द्वारा भी भृगुवंशीय ब्राह्मण एव उनके साथ ही असंख्य ब्राह्मण और वंशों के भी समाविष्ट थे ।१०७।

**प्राप्ता ऋद्धिमतोऽधिकधनाश्चान्यर्षिवशोद्भवाः—**
**विप्राश्चापि समागता गुरुकुले स्वाध्याय यज्ञेऽर्चिताः ।**
**लोके ते बहुचर्चिताश्च सकला विद्यासु धन्या भुवि**
**सांगोपाङ्गतयापि वेदनिपुणा सर्वे स्मृतिपारगाः ।१०८।**

**भावार्थः**—हर प्रकार की समृद्धि प्राप्त होने के साथ ही अन्य ऋषिओं के वंश में उत्पन्न ब्राह्मण भी आए हुए भृगु गुरुकुल में स्वाध्याय यज्ञ में प्रतिष्ठित थे लोक में वे सभी बहुचर्चित थे इस भूमि पर समस्त विद्याओं में धन्य एवं अग्रगण्य थे

साङ्गोपाङ्गतया निपुण एवं सभी स्मृतिशास्त्रों में भी पारङ्गत थे ।१०८।

यज्ञयागादि कृत्येभ्यः प्राप्तं धनं स्थायी न भवतिः—

**यद्यप्येते नृपकुलभवैर्यज्ञयागादिद्रव्यैः**
**गोभूम्याद्यैर्गजहयवृषैस्तोषिता भूपवर्गैः ।**
**तर्ह्यात्येतद्धनमतिचिरं नैव स्थायीति सिद्धं**
**सत्यं जानी ह्यपि नरपते ! भौतिकात्सक्तु न्यायात्।१०९**

भावार्थः—यद्यपि ये भृग्वादि ब्राह्मणलोग राजकुलोत्पन्न राजादि द्वारा यज्ञयागादि से गो, भूमि, (अग्रहार), गज, अश्व, वृषभादि प्राप्त दान द्वारा सन्तुष्ट रहते थे तो भी यज्ञादि से प्राप्त चिरस्थायी धन नहीं होता है राजन् ! सच जानो कि ये भौतिक सक्तुन्याय से प्राप्त धन चिरस्थायी नहीं होता। अर्थात् भूतकी मिठाई (यू. पी.), भूतका पकवान या भूत के सत्तू की तरह हूंके आयी फूंके गयी की यह सम्पत्ति अति चञ्चला होती है। भौतिक सक्तुन्याय का अभिप्राय यह है कि जो वस्तु भ्रम से बहुत दिखाई दे; पर वास्तव में जिसका अस्तित्व न हो। अर्थात् सहज मिला धन जो जल्दी ही नष्ट हो जाये ।१०९

**दत्तासौ क्षितिदानतो नृपवरैर्या क्षिप्तद्रव्या भटैः**
**प्राप्तास्तेऽत्रभृगोः कुलोद्भवजनाः संस्थाप्य विद्यालयान् ।**
**दानस्थाननिवेशनात्प्रतिदिनं द्रव्यैर्विहीनाः समे**
**तेषां पार्श्व इहागता मखविधौ द्रव्याप्तये हैहयाः ।११०।**

भावार्थ:—राजा लोगों ने वह पृथ्वी दान (अग्रहार) रूप में जो पराजित राजाओं से प्राप्त हुई थी और जिस में वीरगति को प्राप्त हुए योधाओं ने बहुत सा अमूल्य धन दबाया था। वहीं भृगुओं ने विद्यालयादि बनाकर छात्रों को अध्ययन कराना आरम्भ कर दिया था किन्तु यज्ञादि का धन स्थायी न होने के कारण वे दीनाति दीन धन हीन होकर येनकेन प्रकारेण निर्वाह कर रहे थे। उनके पास यज्ञार्थ धन मांगने के लिये हैहय आ पहुंचे ।२१०।

राजन्यैर्विनयं विधाय भृगवो संयाचिता ब्राह्मणा–
स्ते प्रोचुर्न हि विद्यते धनमदो प्राप्तञ्च यज्ञादिभिः ।
यज्ञाप्तं धनमत्र भूपतिवराः ? स्थायी क्वचिन्नो भवेत्
तस्माद् दातुमनागसा हि भृगवो दातुं क्षमा नो वयम् ।२११

भावार्थ:—हैहय क्षत्रियों ने नम्रतापूर्वक यज्ञ के लिये भृगुवंशीय ब्राह्मणों से धन मांगा उन ब्राह्मणों ने कहा कि हे राजश्रेष्ठ महोदया ! जो यज्ञादियों से प्राप्त हुआ था वह धन अब तक नहीं टिक पाया। क्योंकि यज्ञ से प्राप्त धन कभी टिकाउ नहीं हो पाता। इस लिये धन देने के लिये भृगु निरपराध हैं क्योकि धन देने में हम समथ नहीं हैं ।२११।

विप्रास्ते ददुरर्थिता न भृगवस्तत्पादवृद्ध्यार्थिता–
नास्तीति प्रतिवादिनो भृगुवरा दृष्ट्वा जड याजकान् ।
भीताः केचन वैदिका धनमदुस्तान्हैहयान्याजकान्
केचित्तत्र पलायिता निजगृहांस्त्यक्त्वाथ शून्यान्गृहान् ।२१२

भावार्थः—मांगने पर जब भृगुवंशीय ब्राह्मणों ने धन नहीं दिया तो सवाये सूद पर धन मांगा तब भी भृगु ब्राह्मणों ने उत्तर दिया कि नहीं है ऐसा कह कर याचकों को देख कर जड की की तरह चुपचाप खडे रहे। कई लोगों ने हैहयों से डर कर यज्ञकर्ताओं को धन दे दिया। कई भृगु अपने घरों को शून्य छोड़ कर अपने घरों से भाग गये ।२१२।

**दृष्टा ते तु पलायितान्द्विजवरान् दुर्गान्गिरीनाश्रितान्**
**भूभागाँश्चखनुश्च हैहयवरा लब्धं धनं भूरिशः ।**
**राजानोददृशुर्धनं बहुतमं स्वर्णादिकं भूतलात्**
**जघ्नुस्ताञ्छरणागतान्द्विजवरान्बाणैस्तथामुद्गरैः ।२१३।**

भावार्थ—उन हैहय क्षत्रियों ने दुर्गपर्वतादियों में भागे हुए देखकर भूभागों को खोदना प्रारम्भ किया तो भूतल से बहुत सा धन स्वर्णादि प्राप्त कर लिया। जो ब्राह्मण उनके शरण में आ गये उनको बाण मुद्गरादि से मारना आरम्भ कर दिया ।२१३।

**यातास्ते गिरि दुर्गमाँश्च भृगवो तत्रापि ते हैहयाः**
**स्त्रीणां गर्भनिपातनेषु निरतास्ते क्षत्रिया हैहयाः ।**
**यद्यत्कर्म जुगुप्सितं भुवितले तत्तत् कृतं हैहयैः**
**गौरीं मूर्तिमयीं व्यधुश्च सरितस्तीरे व्रतं ताः स्त्रियः ।२१४**

भावार्थः—भृगुलोग दुर्गम पर्वताद्रियों में जहां भी गये वहीं हैहय भी पहुंच गये। स्त्रियों के गभ निपातन संलग्न वे हैहय

क्षत्रिय जो निन्द्य से निन्द्य घृणास्पद कृत्य था वही २ कृत्य उन क्षत्रियों ने कर दिखाया। फिर नदी के तट पर गौरी की मूर्ति बनाकर स्त्रियों ने मरण व्रत करना आरम्भ कर दिया ।२१४।

**स्वप्ने प्राह कुलाङ्गना! भगवती कस्याश्चिदूरूद्भवः**
**मच्छक्त्यंशभवः स वोऽत्र पुरुषः कार्यं दिधाता भुवि ।**
**इत्यादिश्य पराम्बिका सकरुणं पश्चात्स्वतोऽन्तर्हिता**
**प्रातर्बोधमवाप्य तास्तु मुदिताः काचिद्भियोद्वेजिता २१५**

**भावार्थः**—उन मरण व्रत धारण करने वाली स्त्रियों को स्वप्न में गौरी भगवती ने कहा हे कुलाङ्गनाओ ! तुमारे में से किसी एक के मेरी शक्ति के अंश से एक पुरुष बालक रूप में ऊरुमें गर्भ धारण किया है वह पुरुष जब उत्पन्न होगा वह तुमारे अभीष्ट मनोरथों को पूर्ण करने वाला होगा। यह आदेश देकर करुणा से युक्त भगवती पराम्बिका अन्तर्धान हो गयी। वे सभी स्त्रियें प्रातः जागी तो अति प्रसन्न थी उनमें एक स्त्री भय से व्याकुल थी ।२१५

**एकेनोरुबलेन गर्भवहनी वंशाभिवृद्ध्यै च या**
**दृष्ट्वा सा तु पलायितात्र बडवा गर्भातुरा सत्वरा ।**
**पश्चाद् दुद्रुवुरोजसाहि रुदतीं तां तापितां क्षत्रियाः**
**क्रुद्धो गर्भगबालकः स तरसा भित्वोरुमाविर्बभौ ।२१६**

भावार्थ:—एक उरु के बल का सहारा लेकर गर्भधारने वाली एक स्त्री अपने वंश की वृद्धि करने के लिये भाग खड़ी हुई जो ब्राह्मणी गर्भ वेदना से व्याकुल दौड़ती देखी तो बड़ी तीव्रता से व्याकुल रोती हुई उस सन्तप्त सती स्त्री के पीछे सभी हैहय क्षत्रिय पुरुष तीव्र गति से दौड़ पड़े। इतने में गर्भ में स्थित बालक क्रोध से झटपट ऊरु (पट्ट) फाड़ कर प्रकट हो गया।२१६।

**साक्षात्सूर्य इवापरः स शिशुराड् दृष्टोश्च मुष्णंस्त्विषा**
**सर्वे हैहय वंशजा विनयना जन्मान्धवद् बभ्रमुः।**
**सर्वैश्चिन्तितमित्थमेव मनसा चक्षुर्विहीना वयं**
**यज्जाता शिशुदर्शनाद्धि सहसा सत्याः प्रभावः स्त्रियः।२१७**

भावार्थ:—साक्षात् सूर्य की तरह चमकता हुआ सद्योजात बालक अपने तीव्र प्रकाश से हैहय वंशीय क्षत्रिय आंखों की ज्योति से रहित जन्मान्ध की तरह इधर उधर जङ्गल दुर्गममार्गभ्रष्ट होकर भटकने लगे। सभी ने मन में सोचा कि बच्चे के दर्शन से हम जो एक दम अन्धे हो गये हैं यह सब उसी सती स्त्री का प्रभाव है।२१७।

**इत्थं निश्चप्रचीविधाय शरणं जग्मुश्च तां ब्राह्मणीं**
**जाता हैहयवंशजागतधियस्त्रस्तां प्रणेमुः सतीम्।**
**जन्मान्धा इव पापिनोऽद्य शरणं प्राप्ताहि त्वां मानदे**
**क्षन्तव्यं हि त्वयाधुना हि तत्तद्यद्यत्कृतं दुष्कृतम्।२१८।**

भावार्थ —इस प्रकार दृढनिश्चय करके वे हैहय वंशीय क्षत्रिय उस भय भीत त्रस्त सती पतिव्रता ब्राह्मणी की शरण में जाकर प्रणाम करके बोले कि मानदे ! जन्मान्ध की तरह हम पापी लोग आपकी शरण में आये हैं जो-जो हमने अपराध किये वह सभी आप क्षमा करदें ।२१८

**क्षत्रान्नः कुरु सेवकान् सुपुरुषि ! श्रेयः सुदृष्ट्या प्रदे**
**सर्वेषाँ भृगुजन्मनां वयमतः सत्सेवका वो ध्रुवम् ।**
**कर्तव्यं शपथैर्न वैरमपरं राज्ञां भृगोर्वंशजैः**
**सा चाह प्रणतान् विलोचननृपान् दृष्टिर्मया नोहृता ।२१९**

भावार्थः—हे सन्नारि ! हमे क्षत्रियों को सेवक बनालो । सुन्दर दृष्टि देकर हमारा कल्याण करो समस्त भृगुवंशियों के हम सच्चे सेवक बन कर रहेंगे । हम शतशः शपथों के द्वारा कहते हैं आगे भृगुवंशियों के साथ कभी क्षत्रियों का वैर नहीं रहेगा । उन शरणागत नेत्र हीनों को भार्गवी ने कहा कि मैंने आपके नेत्रों का अपहरण नहीं किया है ।२१९

**रोषो मे न च दोष एव मनसो दृष्टिर्मया नो हृता**
**सैषो ह्यूरुजजातकोऽद्य कुपितश्चक्षूंषि वोऽस्तम्भयत् ।**
**ताञ्ज्ञात्वा निजबान्धवांश्च जननी गर्भस्थितान् क्षत्रियै**
**निर्दोषान् धनकाम्यया शिशुमयान् निघ्नन्तु यूयंयदा ।२२०**

भावार्थ —हे क्षत्रियो । मेरे द्वारा तुमारी दृष्टि नहीं हरी गई । मैं तुम पर कुपित भी नहीं हूं । इसका वास्तविक कारण

बता रही हूं। इस समय यह जो भृगु कुल का दीपक बालक मेरी जांघ से उत्पन्न हुआ है। तुम इसी के कोप भाजन बन गये हो। रोष में आकर इस बालक ने तुमारे नेत्र स्तम्भित कर दिये हैं। क्योंकि इसे पता चल गया है; कि मेरे सभी बान्धव यहां तक कि जो गर्भ में रहने बाले बालक भी इन क्षत्रियों के हाथ मृत्यु के ग्रास बन गये हैं। भृगु के ये वंशज निरपराधी धर्मात्मा तथा तपस्वी थे। अब तुम इन को मार रहे थे ।२२०।

**तर्ह्येवोरुवरेण वर्षशतकं गर्भो मया वै धृतः**
**साङ्गोपाङ्ग षडङ्ग वेदमखिलं गर्भस्थितोऽधीतवान् ।**
**गर्भस्थो भृगुवंश वृद्धिकरणे युक्तो वधात्पैतृकात्**
**क्रोधेद्धः खलु हन्तुमिच्छतिखलान् बालोऽयमेकोऽपि मे ।२२१**

भावार्थः—तभी मेरे गर्भ में यह बालक आगया था। सौ वर्षों से मैं अपने गर्भ में धारण किये रही हूं। इसने साङ्गोपाङ्ग छहों अंगों सहित सम्पूर्ण शाखाओं सहित पूर्ण वेदों का अध्ययन बड़ी सुगमता से कर लिया है। भृगुवंश का उत्थान करने के लिये प्रकट हुआ यह बालक गर्भ में ही सुशिक्षित हो चुका है ! यही पितरों के वध से कुपित होकर तुम्हें मारने के लिये उत्सुक हुआ है। मेरा यह पुत्र भगवती जगदम्बा की कृपा से उत्पन्न हुआ है ।२२१।

**दिव्येनास्य हि तेजसाद्य मुषितान्यक्षीणि वो हैहया--**
**स्तस्मादौर्वसुतं च मेऽद्य विनयैर्याचध्वमेवातुराः ।**

**तुष्टोऽसौ प्रणिपातजातवशगो दृष्टिं हि वो दास्यति**
**श्रुत्वा तुष्टुवुरञ्जसा सविनयं ते हैहयाश्चोरुजम् ।२२२।**

भावार्थ—इसी के दिव्य तेज से तुमारी आंखें देखने में असमर्थ हो गयी हैं। अत एव तुमलोग मेरे इस पुत्र से ही बड़ी नम्रता के साथ नेत्र पाने की प्रार्थना करो। प्रार्थना करने पर यदि मेरा यह बालक प्रसन्न हो गया तो तुमे नेत्र ज्योति अवश्य ही प्राप्त हो जायेगी। वह बालक एक श्रेष्ठ मुनि के रूप में विराजमान था। ब्राह्मणो की बात सुनकर हैहय क्षत्रियों ने उसके चरणों में मस्तक झुका दिया और स्तुति करने लगे ।२२२।

**तं नेमुर्मुहुरेव ते नतशिरास्तुष्टोऽवदच्चोरुजो**
**गच्छध्वं स्वगृहान्हि हैहय नृपा श्रुत्वा ममाख्यानकम् ।**
**यद्दैवेन विनिश्चितं नियतितोऽवश्यं भवेद्दैवत-**
**स्तस्माच्छोककथाऽन्यथा हि विफला ज्ञेया नृभिर्ज्ञानिभिः ।**

भावार्थ—बार-बार उसके चरणों में नतमस्तक होकर क्षत्रियों ने प्रणाम की तो महर्षि और्व प्रसन्न होकर अन्धे क्षत्रियों से बोला कि—राजाओ! ठीक है, तुम मेरी कही हुई बात पर विश्वास करके अपने २ घर लौट जाओ। देखो जो कुछ दैवने निश्चित कर दिया है वह अवश्य होकर रहता है। इस विषय में विद्वान् एवं ज्ञानी पुरुष को शोक नहीं करना चाहिये ।२२३।

**सर्वे पूर्ववदेव दृष्टय इतः सम्प्राप्नुवन्त्वाऽऽशिषा**
**यूयं यान्तु यथासुखं स्वभवनानिक्रोधमूलोज्झिताः ।**
**आदिष्टा इह हैहयाः सनयना और्वेन जग्मुर्गृहं**
**सैषार्ची हि ऋचीकपुत्रसहिता प्राप्ताऽऽप्नुवन्तं पतिम् ।२२४**

**भावार्थ:**-सभी ऋषि लोग पहिले की भान्ति सुखपूर्वक जीवन व्यतीत करें सभी क्षत्रिय भी क्रोधत्याग कर अपने २ घरों को चले जाऐं उनकी दृष्टि भी पहिले की भान्ति हो जाएगी इस प्रकार उस तेजस्वी बालक के उपदेश देने पर वे हैहय संज्ञक क्षत्रिय और्व की आज्ञा लेकर इच्छानुसार अपने घर चले गये । अब उनके नेत्रों में ज्योति पूर्ववत् आ गयी थी । वही आर्ची (ऋची, रुची, आरुषी, व नहुष राजा की कन्या) उस दिव्य अपने पुत्र और्व (ऋचीक) को लेकर अपने पति आप्नुवान् जी के पास अपने आश्रम में चली गयी ।२२४।

—श्रीदेविभागवते

**ये गर्भाः शतकाधिकाब्दनिहताः कोट्याधिकैर्हैहयै-**
**र्ये सर्वे परशोः पुरोगमभवास्ते बालखिल्या इव ।**
**गर्भाभांश्च विनाशाय नियताः साक्षाच्च क्षात्रोत्प्लवा-**
**ये निद्रां परशोर्विनाशनपरा निष्पीडयन्तो ऽनिशम् ।२२५**

**भावार्थ:**—सैंकड़ों वर्ष पहिले से करोड़ों हैहय क्षत्रियों ने परशुराम से जो बहुत पहले लाखों ब्राह्मणों के भृगुओं के शिष्यों सहित कई गर्भ गिराए वे सभी परशुराम की आखों के आगे घूमते

रहते हैं जैसे साठ हजार बालखिल्य ऋषि रथारूढ़ सूर्य के आगे २ स्तुति करते चलते रहते हैं। गर्भस्थ बच्चों को विनाश करने के लिए साक्षात् हैहय रूपी राहु द्वारा निपातित गर्भस्थ बालक परशुराम जी को दिनरात निद्राभंग करने के साथ २ ही पीडित भी करते रहते हैं।२२५।

**निर्दोषोऽयं परशुः सुपूर्वजवरैर्गर्भाच्च्युतैर्बालकै—**
**रेकत्री कृत पापकैर्नरपते ! तीव्रं महापातकैः**
**क्षात्रं वैष्णवतेजसा ऋचिसुतैर्गाधेस्तु पत्नीकृते**
**ब्राह्मरौद्र सुतेजसा निजकृते दिव्यौ चरू कल्पितौ।२२६।**

भावार्थः—ये परशुराम निर्दोष है इसके पूर्वज महर्षियों ने गर्भ से पतित बालकों के सहित इकट्ठे किये हुए पापों के साथ हे नरपते ! और तेरे महापातकों के शमनार्थं ऋचीक महर्षि ने गाधि की पत्नी के लिये क्षात्रवैष्णव तेजोयुक्त एवं अपनी पत्नी के लिए ब्राह्मरौद्र तेजोयुक्त दो चरु तैयार किये।२२६

**दैवात्तत्रविपर्ययः समजनि श्रीगाधिपत्नी स्वयं**
**कौशिक्याश्चरुभक्षणं कृतवती स्वीय च पुत्र्यै ददौ।**
**उग्रं गर्भमुदीक्ष्य वै मुनिरसौ साश्चर्यमाह स्त्रियं**
**सा चाह मम मातुरादर वशाज्जातोऽन्यथा मे प्रिय !।२२७**

भावार्थः—दैववश चरु भक्षण में विपर्यय हो गया गाधि पत्नी अपनी पुत्री कौशिकी (सत्यवती) का चरु खा गयी। अपनी पुत्री को अपना चरु खिला दिया। उग्रगर्भ को देखकर

भावार्थः—हे पुरोहित जी ! इस गौ ने मेरा हृदय खींच लिया है इसे अवश्य ग्रहण करूंगा। गर्ग बुद्धिमान् ऋषि अर्जुन को कहने लगे ऐसा वचन मत बोलें। ऐसा यत्न आप के धर्म और वंश के विनाश के लिये सिद्ध होगा। यह वचन सुन कर दुष्ट चन्द्रगुप्त कुबुद्धि बोला ।३८७।

**विप्राविप्रहितेरताः प्रकृतितो न क्वापि राज्ञां हिते**
**आनिष्येऽहमनुज्ञयाद्य भवतश्चिन्तां वृथा मा कुरु ।**
**इत्युक्त्वा हि गतः स सैनिक युतः राज्ञोऽनुमत्या द्रुतं**
**गां बद्ध्वानिगडैश्चकर्ष कुमतिः सन्ताड्य लगुडैर्मुनिम् ।३८८**

भावार्थः—ब्राह्मण ब्राह्मण के हित की ही सोचता है इस की प्रकृति ही ऐसी होती है कभी राजा के हित की नहीं सोचेगा। आपकी अनुज्ञा से आज ही ले आऊंगा आप वृथा चिन्ता मत करें। यह कह कर वह सैनिक बल के साथ गया और गौ को कड़े बन्धनों से बान्ध कर दुर्बुद्धि खैंचने लगा मुनि के रोकने पर उसे लगुड़ों से पीट २ कर मूर्छित कर दिया ।३८८

**दृष्ट्वैतत्कपिला च कोपवशगा सैन्यं बलं दूरतः**
**प्रक्षिप्याथ ययौ च सोर्ध्वगगनं सद्योह्यदृश्याभवत् ।**
**तस्या वत्समनेकराजपुरुषाः निन्युः पुरीं पीडितं**
**मूर्छाप्तं जमदग्निमेत्य परशोर्माता च सा रेणुका ।३८९।**

भावार्थ—यह देख कपिला माता अत्यन्त कोप वश सैनिक बल को दूर फैंककर आकाश में ऊपर चली गयी झट से अदृश्य

हो गयी। उसके बछड़े को बहुत से राजपुरुष पीटते हुये माहिष्मति पुरी में लेगये मूर्छा को प्राप्त जमदग्नि के धाम परशुराम जी की माता रेणुका जी आ गयी।३८९।

**हा रामेति ह्युरः प्रताडिवती त्रिःसप्तकृत्वः स्वयं**
**सद्योऽवाप तदैव राम रिपुहा प्राहाथ स्वां मातरम्।**
**अम्बेऽलं रुदतीं सतीं स परशुस्तां सान्त्वयामास वै**
**वक्षो ह्यद्य समाहतं च यदिदं त्रिः सप्तकृत्वःत्वया।३९०**

भावार्थः— 'हा राम" ऐसा कहती हुई उसने अपनी छाती को इकीस २१ बार स्वयं पीटा। उसीक्षण शत्रुओं के नाशक परशुराम जी अपनी माता जी से कहने लगे "अम्बे अलं" हे माता बस करो ऐसे रोती हुई अपनी मां को परशुराम जी ने सान्त्वना देते हुए कहाकि तूने आज २१ बार अपनी छाती को स्वयं पीटा है।३९०।

**तावत्संख्यमहं हनन्नृपकुलाँस्त्रिःसप्तकृत्वो भुवं**
**इत्थञ्चाद्य मयातिघोरजटिलाऽसाध्या प्रतिज्ञा कृता।**
**श्रुत्वा प्राह वचः स्वपुत्रपरशुं वैधव्य दुःखं महत्।**
**भर्तारं ह्यनुगन्तुमिह इति मे स्वेच्छा दृढाऽऽस्ते हृदि।३९१**

भावार्थ —उतने ही २१ वार राजकुलों को नाश करता हुआ पृथ्वी को २१ बार निःक्षत्र कर दूंगा। इस प्रकार आज मैंने घोर, जटिल, असाध्य प्रतिज्ञा कर दी है। यह सुनकर रेणुका

ने अपने पुत्र परशुराम को कहाकि वैधव्य घोर दुःख माना गया है इस लिये मेरी पति के साथ जाने की दृढ इच्छा हृदय में विद्यमान है ।३९१।

**तत्काले ह्यशरीरिणीह झटिति प्रोवाच वाणी खतो**
**रेणोर्वंश भवे ! शुभे ! स्वतनयैर्वाणी शृणु त्वं शुभाम् ।**
**भर्त्ता ते भवितेह चैतनतया सद्योऽत्र मारोदिहि**
**दैवात्तत्र समागतो भृगुमुनिः सर्वार्थविद् वाग्मिषु ।३९२।**

भावार्थः—उसी समय आकाश से शरीर रहित तत्क्षण वाणी ने कहाकि हे इक्ष्वाकुवंशीय रेणुसुते ! शुभगे !अपने पुत्रों सहित शुभ बाणी सुनो। तेरा पति शीघ्र ही चेतन होने वाला है इस लिये मत रोना ! अकस्मात वहां भृगु मुनि महाराज जो सर्वार्थज्ञ महर्षियों में श्रेष्ठ हैं वे दैववश आगये ।३९२

**दृष्ट्वा ते तु भृगुं कुलस्य पितरं चोत्थाय सत्कृत्य च**
**सर्वे वै ददुराशु तं भृगुवरं स्वोच्चासनं तद्विदः ।**
**आशीराशिभिरेव तान्कुलभवान् सर्वानभिनन्द्य स**
**अप्राक्षीत् किमिदं सुवृत्तमखिलं प्राहुश्च तेऽप्यादितः ।३९३।**

भावार्थः—उन सभी लोगों ने भगु कुल ज्येष्ठ पितर (पितामह) को देख कर उपस्थान सत्कारादि पूर्वक झट से सभी ने भगुमहाराज जी को उच्चासन द्वारा पुरस्कृत किया। उन्होने भी आशीर्वचनों द्वारा सभी निजकुल में उत्पन्न

परिवार के सदस्यों को अभिनन्दित किया और सत्कारादि के पश्चात् पूछा कि ये सब क्या वृत्त हुआ ? उन लोगों ने आदि से पूर्णवृत्त कह सुनाया ।३९३।

**तच्छ्रुत्वा स भृगुर्जलं करगतं सञ्जीविनी विद्यया**
**स्वामन्त्र्याथ समाक्षिपद्समावार्चीक एवोत्थितः ।**
**दृष्ट्वासौ प्रपितामहं भृगुवरं वन्द्यं नतः प्राञ्जलिः**
**प्राहाथो भगवन् ! कृतार्थितोऽस्मि भवता धन्योऽभवं दर्शनैः।**

**भावार्थः**—समस्त वृत्तान्त से अवगत होकर भृगुजी ने हाथ में जल लेकर सञ्जीविनी विद्या से अभिमन्त्रित करके उस जमदग्नि पर छिटका तो वह ऋचीक पुत्र स्वयं उठ खड़ा हुआ अपने प्रपितामह के प्रत्यक्ष दर्शन करके अभिवादनीय ढंग से नतमस्तक हो अञ्जलिबान्ध कर उसने कहा कि हे भगवन् ! आपने मुझे कृताथ कर दिया आपके दर्शनों से मैं धन्य हो गया हूं ।३९४

**पश्येऽहं चरणौ च तेऽद्य मुनिराड् ! देवासुरैर्वन्दितौ**
**शुश्रूषां तव किं करोमि मतिमन् ! जीवातुभूतस्य मे ।**
**आप्यायस्व कुलं निज प्रकृतिजं पाद्याम्बुजैः शीकरैः**
**रामोऽसौ प्रददौ तदर्घ्यमनघं भक्त्यानतः पादयोः ।३९५।**

**भावार्थः**—हे मुनिराड् ! देवता और दानवों द्वारा नमस्कृत चरणों के आज मैं दर्शन कर रहा हूं । आप मेरे पुनर्जीवनदान करने

वाले हैं हे भगवन। मैं आपकी क्या सेवा करता हूं अपने प्राकृत वंश को आप अपने चरणकमलों के जलकणों द्वारा पवित्र कर दीजिये। उसी समय परशुराम जी ने चरणों में नतमस्तक होकर उत्तम अर्घ्य प्रदान किया।३९५।

**वंशेशोऽर्घ्यजलन्त्वधत्त शिरसा सर्षिः कुटुम्बान्वितः**
**सत्कृत्य प्रपितामहं सविनयं पप्रच्छ भूपोचितम्।**
**शप्तः पूर्वमसौ वसिष्ठ मुनिना नाशार्थमुक्तो नृपः**
**रामोऽयं नृपपुङ्गवं परशुनावश्यं हनिष्यत्यघम्।३९६।**

भावार्थ:—वंशाधिप भृगुमहर्षि ने सपरिवार उस अर्घ्यजल को सिर से धारण कर लिया। अपने प्रपितामह के विधिवत्सत्कार के पश्चात् जमदग्नि ने बड़े विनय पूर्वक पूछा कि राजा के लिये क्या उचित है? तो भृगु ने कहाकि राजा तो पहिले ही महर्षि वशिष्ट द्वारा सर्वनाशार्थ शाप प्राप्त है यही परशुराम इस नृपश्रेष्ठ रूपी पाप को अवश्य मारेगा।३९६।

**निर्भूपामचलाँ विधाय सकलां त्रिः सप्तकृत्वो बलात्**
**पित्रायं प्रतिबोधितोऽपि सतत पूर्णप्रतिज्ञस्त्वया।**
**अर्थस्यापि च भाविनो ह्यतिबलान्नूनं बिधास्यत्ययं**
**दत्तात्रेयहरेर्लवान्नृपवरः संल्लब्धबोधो महान्।३९७।**

भावार्थ:—समस्त पृथ्वी को निर्भूप (राजाओं रहित) २१ बार अवश्य करके तेरे जैसे निश्छल पिता के बहुत बार समझाने पर भी निरन्तर पूर्ण प्रतिज्ञ होता जायेगा। भावी अर्थ के

बलवान् होने से अवश्य करेगा। दत्तात्रेय भगवान् के अंश से यह नृपश्रेष्ठ सम्यक्त्वेन हर प्रकार से महात्मा है ३९७

**वृद्धानां सदुपासिता नरपतिः साक्षान्महात्मा स्वतः**
**भक्तत्वादतिपातकं नृपवधाद् उक्त्वेत्यगच्छद्भृगुः।**
**स्वावासं तु गतेऽतिथौ भृगुवरे प्रोवाच रामः सुधीः**
**मौढ्यं ह्युत्पथगामिनो नृपगुरोः सत्कार्तवीर्यस्य तत्।३९८**

भावार्थः—वृद्धों का सदुपासक, स्वतः साक्षात् महात्मा स्वरूप एवं भगवान् का भक्त होने से इस राजा का वध अतिपाप है ऐसा कहकर मुख्यातिथि भृगु के चले जाने पर परशुराम जी बोले उन्मार्ग गामि कार्तवीर्य का बड़ा भारी मूढ पन है ।३९८।

**अत्र ब्रह्मवधोद्यमोऽर्जुनकृतो राज्ञो महापातकं**
**शृण्वन्त्वद्य तपस्विनो मुनिवराः प्रतिज्ञां मदीयां पराम्।**
**हत्वाजौ रिपुकार्तवीर्यनरपं वैरं पितुः साधये**
**शक्राद्यैरपि रक्षितं सुरवरैः सङ्घातयिष्ये ध्रुवम्।३९९।**

भावार्थः—यहां ब्राह्मण के वध के लिये किया गया सहस्रार्जुन राजा का प्रयास महापातक है। इस लिये हे तपस्वियों एवं मुनिजनो मेरी प्रतिज्ञा सुनिये मैं प्रतिज्ञा करता हूं कि पिता के वैर को याद करके राजा को युद्ध में मार कर पछाड़ दूंगा। यदि देवताओं के स्वामि इन्द्र भी देवताओं के साथ इस की सुरक्षा करेंगे तो भी अवश्य इसे मार ही दूंगा ३९९

**रामं तं जमदग्निराह सुत भो विप्राः क्षमा साधनाः**
**कुप्यन्तीह न साधवः क्वचिदपि क्रुद्धेषु दुष्टेष्वपि ।**
**रामोऽसौ जमदग्निमाह शमनं दीनेष्वपि साधुषु**
**कर्तव्यस्तु शमः पितर्नहि भुवि क्रुद्धेषु धूर्तेष्वपि ४००।**

भावार्थः—श्री रामजी को जमदग्नि मुनि जी ने कहा हे पुत्र ! ब्राह्मण का क्षमा ही अमूल्य साधन है सज्जन कभी संसार में क्रुद्ध और दुष्टो पर भी क्रोध नहीं करते । राम ने जमदग्नि को कहा कि हे पिताजी ! दीन और साधु पुरुषों पर शान्ति का व्यवहार रखें किन्तु क्रुद्ध और धूर्त पर कभी शान्ति का व्यवहार उचित नहीं है ।४००।

**पुत्रं स्वं जमदग्निराह मनसा भावीभवेन्नान्यथा**
**ब्रह्माणं व्रज तात ! पृच्छ सकलं यच्चादिशेत्तत्कुरु ।**
**नत्वासौ पितरं जगाम परशुः श्री ब्रह्मलोकं मुदा**
**दृष्ट्वासौ कमलोद्भवं सुरनुतं भक्त्या प्रणम्याशु तम् ४०१**

भावार्थ —जमदग्नि ने मन में सोचा कि भावी अटल है वह कभी नहीं टलती फिर अपने पुत्र परशुराम को कहाकि हे तात ! ब्रह्मा के पास जाओ सब कुछ पूछो जो वे आदेश करें उसका पालन करो । परशुराम ने पिता जी को प्रणाम कर प्रसन्न होकर ब्रह्मा जी के पास ब्रह्मलोक में जाकर उनके दर्शन कर देवताओं के द्वारा नमस्कृत ब्रह्मा जी को भक्ति से प्रणाम करके ।४०१।

**आशीर्भिस्त्वभिनन्द्य तं द्विजवटुं पप्रच्छ क्षेमादिकं**
**त्वं वत्सागमनं कथं न्विह कृथाः पृष्टोऽथ रामोऽब्रवीत् ।**
**पूर्णं वृत्तमुदीर्य गेहजनितं घोरां प्रतिज्ञामपि**
**श्रुत्वा पर्शुवचो ऽब्रवीद्विधिरमुं धर्मिष्ठरामं प्रियम् ।४०२**

भावार्थः – ब्रह्मा जी ने आशीर्वचनों द्वारा उस विप्रवटु को अभिनन्दित करके घरेलु कुशलादि पूछी हे वत्स ! तुमारा यहां आना कैसे हुआ । ऐसा पूछने पर रामजी ने आदि से अन्त तक पूर्ण वृत्तान्त घर में जो घटा था सभी कह सुनाया और अपनी घोर प्रतिज्ञा भी सुनादी । पर्शुराम के वचन को सुनकर ब्रह्मा जी अपने राम जी को कहने लगे ।४०२

**सृष्टीयं हि सनातनी भगवतोऽपारानुकम्पोद्भवा**
**संक्लेशेन तदाज्ञया जगदिदं सृष्टं मया यत्नतः ।**
**तन्नाशार्थमियं रुषात्र भवता घोरा प्रतिज्ञा कृता**
**ब्रह्मक्षत्रविट्पादजैरियमहो सृष्टिर्हरेरद्भुता ।४०३।**

भावार्थ —यह सृष्टि भगवान् की अपार अनुकम्पा से उत्पन्न हुई है । उसी भगवान् की आज्ञा से अनन्त कष्टों को झेल कर अत्यन्त यत्न से मैंने इस जगत् को रचा है उसी जगत् को नाश करने के लिये क्रोध मे आपने यह घोर प्रतिज्ञा करदी ब्रह्म, क्षत्रिय, वैश्य शूद्रों सहित यह भगवान् की अहो । अद्भुत सृष्टि है ।४०३

अर्थात् एक व्यक्ति के दोष से या एक मात्र राजा के दोष से एक मात्र पिता के तिरस्कार से पृथ्वी को इकीस वार राजाओं से रहित कर दोगे। सृष्टि भगवान् की ओर से बनती रहती है समाप्त भी होती रहती है अतः यह सृष्टि सनातनी है।

**आयासेन हि कार्यसिद्धिरथवा शम्भुः प्रमाणं स्वयं**
**याहि त्वं शिवलोकमेव शरणं स्वाज्ञां शिवस्याऽऽप्नुहि।**
**भूपाः शङ्कर किंकरा हि बहवस्तान्हन्तुमीशोऽस्ति कः?**
**श्री शम्भोः शरणं विहाय परशो? त्राता न कश्चित्परः।४०४**

भावार्थः—अत्यन्त कृच्छ्र प्रयत्नों से कार्य सिद्धि होगी अथवा स्वयं कर्ता हर्ता स्वयं भगवान् शङ्कर ही प्रमाण हैं। तू सीधा शिव लोक में जा वही आपकी शरण है पहले शिव की आज्ञा प्राप्त करो बहुत से राजा शङ्कर के किंकर (अनन्य) भक्त हैं, उनको मारने की कौन सा व्यक्ति सामर्थ्य रखता है? श्री भगवान् शङ्कर की शरण छोड कर अन्य कोई दूसरा रक्षक नहीं है।४०४

**ब्रह्माज्ञां शिरसा वहन् स परशुर्नत्वा च भक्त्या विधिं**
**प्राप्तोऽसौ शिवलोकमीशशरणं दन्त्यम्बस्कन्दान्वितम्।**
**भक्त्या साम्बशिवं प्रणम्य शिरसा हेरम्ब स्कन्दान्वितं**
**स्तुत्वासौ नतकन्धरः परिचितिं प्रास्तोष्ट बद्धाञ्जलिः।४०५**

भावार्थ.—ब्रह्मा की आज्ञा को शिरोधार्य कर ब्रह्मा जी की भक्ति से युक्त हो प्रणाम करके शङ्कर भगवान् की शरण में गणेश

गौरी स्कन्द से युक्त शिवलोक में पहुंच गया। भक्ति से अम्बासहित शङ्कर जी को शिर झुकाकर हेरम्ब (गणेश) एवं स्कन्द सहित सबको प्रणाम करके एवं नतमस्तक हो स्तुति करके बद्धाञ्जलि होकर अपनी परिचिति प्रस्तुत की ।४०५।

**आशीराशिभिराशु तं स्वकृपया ह्यास्वज्य संवर्ध्य च**
**पुत्रः स्कन्दगणेशवत्त्वमसि भो स्तुत्यैव ज्ञातं मया।**
**इत्युक्त्वाथ ददौ समन्त्रकमसौ कृष्णस्य कवचं महत्**
**ब्राह्मं पाशुपतं सनागपतिभू पाशं सनारायणम् ।४०६।**

भावार्थ:—आशीर्वचनों की राशि के साथ ही अपनी कृपा से आलिङ्गन कर वर्धापन के अतिरिक्त युद्ध के सर्वस्व भूत उसे सान्त्वना देते हुए कहा कि तुमारी स्तुति से मुझे ज्ञात हुआ कि तू स्कन्द एवं गणेश की तरह मेरा पुत्र भी है। यह कह कर उसे समन्त्रक त्रैलोक्य विजय श्री कृष्ण कवच भी दे दिया। उसी के साथ ब्राह्म पाशुपत, नागपाश नारायणास्त्र ।४०६।

**वायव्यन्त्वथ वारुणं गरुडजं गान्धर्वजृम्भास्त्रके**
**प्रीत्यासौ च गदां सशक्ति परशुं शूलं च दण्डं ददौ।**
**नत्वा साम्बशिवं गुहं गणपतिं नीत्वास्त्रजालं मुदा**
**प्राप्याशीरभिनन्दितो नतशिरः प्रीतः परीत्य क्रमात् ।४०७**

भावार्थ—वायव्य, वारुण, गारुड, गान्धर्व, जृम्भास्त्र भी प्रीति से भगवान् शङ्कर जी ने दे दिये उसके साथ ही गदा, शक्ति

परशु, शूल, दण्ड भी दे दिये। साम्बसदा शिव गणेश स्कन्द को प्रणाम कर अस्त्र समूह को प्रसन्नता पूर्वक ग्रहण करके आशीर्वादों से अभिनन्दित होकर प्रसन्नमुद्रा में क्रमशः सबकी प्रदक्षिणा की ।४०७।

**रामो मन्त्रमवाप्य वै गुरुमुखाद्भक्त्या व्यधात्साधनं**
**नित्यस्नानपरायणस्त्रिषवणं सन्ध्याग्निहोत्रं चरन् ।**
**भूशायी स उवास पुष्करतटे दर्भेध्मपुष्पग्रहं**
**तच्छिष्यो ह्यकृतव्रणोऽस्य विदधे चानीय दूराद्वनात् ४०८**

भावार्थ:—श्रीराम ने अपने गुरुदेव भगवान् शङ्कर जी से समन्त्रक कृष्ण जी के त्रैलोक्य विजय कवच को लेकर भक्ति पूर्वक साधन करता रहा नित्यस्नान, त्रिषवण सन्ध्योपासन होमादि को करता हुआ भूशयन पूर्वक पुष्कर तटपर आश्रम बनाकर रहने लगा। कुशा, समिधा एवं पुष्पादि का संग्रह उनका शिष्य अकृतव्रण ही दूर से दूर वन से लाकर उपस्थित करता रहा ४०८।

**कृष्णध्यानरतो निरन्तरमसावाराधयामास तं**
**कृष्णं कल्मषनाशनं नटवरं रामस्य तस्याऽऽत्मनः ।**
**एवं वर्षशतं गतं सुजपतो ध्यानान्वितस्यैकदा**
**रामः स्नातुमियात्सुपुष्करमसौ गत्वा ददर्शाद्भुतम् ।४०९**

भावार्थ —इसी प्रकार कृष्ण के ध्यान में लीन होकर उस नटवर, समस्त पापों के नाश करने वाले भगवान् कृष्णकी आराधना

करने लगा। उस राम के अपने आराधन में लगे हुए ध्यान से जप करते हुए सौ वर्ष का समय बीत गया एक बार श्रीराम जी स्नान करने के लिए सुन्दर पुष्कर तीर्थ पर चले गये वहां जाकर उन्होंने एक अद्भुत दृश्य देखा ।४०९।

**आयातस्तु पलायितो भृगवरो मृग्या सहायो वनाद्**
**घर्मार्तोऽप्यतिपीडितोऽत्र मृगयाँ व्याधस्य जातस्त्वयम् ।**
**रामस्यैव हि पश्यतः स सरसस्तीरं समभ्यागतः**
**पातुँ नीरसमुत्सुकोऽतितृषयाह्यार्तस्तु पश्चान्मृगी ।४१०।**

भावार्थ —यहां मृगी के साथ एक मृग वन से भागता हुआ आ निकला। गर्मी से व्याकुल हुआ सा शिकारी का शिकार बना हुआ यह मृग अत्यन्त पीडित था। राम जी के देखते २ वह सरोवर के तटपर आ पहुंचा। अत्यन्त प्यास से व्याकुल हुआ उसके पीछे मृगी भी थी जल पीने के लिये वह उत्कण्ठित हो गया ।४१०।

**आयातौ चकितेक्षणौ भयवशात् पेपीयमानौ जलं**
**तौ च द्वावपि शङ्किताबुभयतः सम्पश्यमानौ भिया।**
**व्याधस्तत्र समागतः क्षणमिवेष्वासेषुपाणिर्द्रुतो**
**दृष्ट्वासौ ह्याकुलव्रणं च परशुं दूरेक्षणः संस्थितः ।४११।**

भावार्थ:—वे दोनों मृगमृगी जल पीने के लिये उतरे तो दोनों के नेत्र आश्चर्य (चकित) अवस्था में अति चञ्चल थे दोनों शङ्कित एवं दोनों भयभीत से दोनों ओर वार २ देख

रहे थे। क्षणभर में ही धनुर्वाण हाथ में लिए दौडता हुआ व्याध भी आपहुंचा परशुराम और अकृतव्रण को दूर से देखने लगा ।४११।

**दृष्ट्वासौ किल शंकितो भृगुवरात् संचिन्तयामास वै**
**रामः काल इवापरो भुवि महावीरोऽतिदुष्टान्तकृत ।**
**एतस्याद्य हि पश्यतः कथमहं हन्म्यत्र साक्षान्मृगौ**
**सन्त्रस्तो मृगयुर्भयाद्विचलितस्तस्थौ स चिन्तातुरः ४१२।**

भावार्थः—वह व्याध (शिकारी) रामजी को देखकर भृगुवर की ओर शंकित सा होकर सोचने लगा कि यह राम तो भूमि पर दूसरा काल के समान महावीर है जो अत्यन्त दुष्टों का संहार करने वाला है। इसके सामने आज मैं अपने सामने साक्षात् वर्तमान दोनों मृग मृगी को कैसे मारूं? इस प्रकार राम के भय मे विचलित होकर चिन्ता से व्याकुल वह शिकारी वहीं स्तब्ध हो गया।४१२

**रामो वीक्ष्य मृगौ तटे तु सभयं तौ द्वौ पिबन्तौ जलं**
**मेधावी बहुशश्च तर्कणपरः किन्वत्र भीकारणम् ।**
**व्याधोऽप्यत्र न दृश्यते क्वचिदहो शार्दूलनादोऽपि न ।**
**केनेताविह शङ्कितौ सुचकितौ खिन्नौ सुकम्पान्वितौ ।४१३**

भावार्थ - राम ने डरे हुए दोनों मृग मृगी को तट पर जल पीते देखा। अत्यन्त मेधावी ने अनेक प्रकार के तर्कवितर्क के

उधेड़बुन में लगे हुए सोचा कि इस में डरका कौन सा कारण हो सकता है। व्याध भी यहां दृग्गोचर नहीं होता नाही कहीं व्याघ्र का घोर शब्द सुनाई देता है ये दोनों शङ्कित, अति चकित, अति खिन्न एवं अति कम्पित किस कारण हैं ?

**सञ्चिन्त्येत्थमुभौ सुपुष्करसरो मध्येस्थितौ तापसौ**
**पीत्वा तौ मृगदम्पती जलमहो सद्वृक्षच्छायाश्रितौ ।**
**रामं वीक्ष्य तु दम्पती सुमनसा चोभौ कथां चक्रतुः**
**तिष्ठावोऽत्र सखे ! मृगीत्थमवदद्यावत्सरामः स्थितः ।४१४**

भावार्थ —इस प्रकार राम और अकृतव्रण दोनों तपस्वी सुन्दर पुष्कर सरोवर के मध्य में किसी लघुद्वीप में बैठ गये और मृग मृगी भी यथेष्ट जलपान करके वृक्ष की छाया में बैठ गये रामजी के दर्शन कर दोनों मृगदम्पती प्रसन्नमानस होकर कथा करने लगे। मृगी बोली हे सखे ! हम दोनों तब तक यहां बैठते हैं जब तक वे राम जी यहां बैठते हैं ।४१४।

**सान्निध्येऽस्य भृगोर्भवेन्न हि भयं कस्माच्चिदप्यावयो-**
**रद्यापि प्रहरिष्यतीह मृगया व्याधः स चेदावयोः ।**
**सद्यो यास्यति भस्मसाच्च मुनिना सद्दृष्टमात्रो ऽप्यसौ**
**पर्शोर्दर्शन तुष्टयोक्तवचने मृग्या मृगो हर्षितः ।४१५।**

भावार्थः—इस भार्गव रामजी के समीप हम दोनों को किसी से भय नहीं है। यदि आज भी वह व्याध हमें शिकार समझकर

प्रहार करेगा तो श्रीराम भार्गव मुनीश्वर की दृष्टि मात्र से यहीं भस्म हो जायेगा। मृगी के रामदर्शन द्वारा प्रसन्नता अवस्था में कहे हुए वचन पर हिरण हर्ष से फूल उठा।३१५

**सत्यन्तत्त्वखिलं यदेव वदसि त्वं प्रेयसि ! प्रेमतः**
**तज्जानेहमपीह भार्गवमुनेः सिद्धेः प्रभावं स्वयम् ।**
**विप्रोऽयं त्वकृतव्रणो भगवतो यः पार्श्वतो दृश्यते**
**योऽसौ व्याघ्रभयातुरोऽत्र भृगुणा त्रातो महासंकटात् ।३१६**

भावार्थः—हे प्रेयसि ! तू ने प्रेम से जो कुछ कहा है, वह सब सत्य है। भार्गव मुनि की सिद्धि के प्रभाव को स्वयं मैं भी अच्छी तरह से जानता हूं। भगवान् परशुराम जी के पास जो अकृतव्रण नाम का जो ब्राह्मण दिखाई दे रहा है यह वही ब्राह्मण है जो व्याघ्र के भय से व्याकुल था और उसे महासंकट से ग्रस्त देखकर भृगु ने ही यहां बचाया था।३१६

**रामोऽयं जमदग्निजो लघुसुतः श्रीरेणुकागर्भजः**
**कार्तवीर्यनराधिपेन पितरं दृष्ट्वा कदर्थी कृतम् ।**
**क्रुद्धोऽयं नृपघातिनीमतितरां घोरां प्रतिज्ञां व्यधात्**
**तत्पूर्त्यै पितुराज्ञयैष परशुः श्रीब्रह्मलोकं ययौ ।३१७।**

भावार्थः—यह राम जमदग्निमहर्षि का रेणुका के गर्भ से उत्पन्न सभी पुत्रों में छोटा बालक है। कार्तवीर्यार्जुन सहस्रबाहु राजा के द्वारा तिरस्कृत अपने पिता को दुर्दशा में देखकर

इस ने क्रुद्ध होकर राजा को मारने की अत्यन्त घोर प्रतिज्ञा करदी उस प्रतिज्ञा की पूर्ति के लिये अपने पिता की आज्ञा से परशुराम ब्रह्मलोक में चला गया ३१७।

**ब्रह्माज्ञां शिरसावहन् पुनरयं श्रीशम्भुलोकं गतः**
**प्रीतः शम्भुरदात्समस्त कवचं कृष्णस्य दिव्यं परम् ।**
**शस्त्रास्त्रौघमवाप्य दैवकृपया सोऽयं त्विहैवागतः**
**कृष्णध्यानपरायणः स कवचं कृष्णस्य नित्यं जपन् ३१८**

भावार्थः—ब्रह्मा की आज्ञा को शिरोधार्य कर फिर वह ब्रह्मा को नमस्कार कर शिवलोक को चला गया स्तुत्यादि से प्रसन्न शङ्कर भगवान् जी ने त्रैलोक्य विजय कृष्णकवच समन्त्रक दिया उसके साथ ही शस्त्रास्त्र समूह को दैवकृपा से प्राप्त कर वह यहीं पुष्कर तीर्थ पर आगया। श्री कृष्णध्यान में लीन होकर नित्य श्री कृष्ण कवच के मन्त्र का निरन्तर जप करता आ रहा है ।३१८।

**एवं वर्षशतं गतं च जपतः सिद्धिर्न जातास्य तु**
**अत्राप्यस्ति विशेषकारणमिदं भक्तेस्तु त्रैविध्यतः ।**
**ज्ञेया चोत्तममध्यमाधममयी भक्तिस्त्रिधामोत्तमा**
**येनात्रैव विधीयते स सकलां सिद्धिं स्वतः प्राप्नुयात् ।३१९**

भावार्थः—इसी प्रकार जप करते सौ वर्ष बीत गया इसको सिद्धि प्राप्त नहीं हुई। इस में भी विशेष कारण यह है कि भक्ति

तीन प्रकार की है उत्तम, मध्यम एवं कनिष्ठ इन तीनों भेदों में से उत्तम भक्ति तीनों लोकों में उत्तम मानी जाती है जिसके अपनाने से मनुष्य समस्त सिद्धियों को प्राप्त कर लेता है ।३१९।

**शिवस्य नारदस्यापि शुकस्य च महात्मनः ।**
**अम्बरीषस्य राजर्षे रन्तिदेवस्य मारुतेः ।।**

**बलेर्विभीषणस्यापि प्रह्लादस्य महात्मनः ।**
**उत्तमाभक्तिरेवास्ति गोपीनामुद्धवस्य च ।।**

**मध्या च भक्तिरेवास्ति प्राकृतान्यजनेषु च ।**
**मध्यभक्तिरयं रामो नित्यं यमपरायणः ।।**
**सेवते गोपिकाधीशं तेन सिद्धिं न चागतः ।।**

**ईदृग्ज्ञानमलौकिकं तव कथं ? पप्रच्छ कान्तं मृगी**
**प्रोवाचाथ मृगीं सुनयने ! पुण्येन सञ्जायते ।**
**तत्पुण्यं भृगुदर्शनात्सम्भवत्त्वद्यैव लोकोत्तरं**
**पुण्यात्मा भृगुनन्दनो भगवतः कृष्णस्य भक्ताग्रणीः ।३२०**

भावार्थ—हिरणी अपने पति हिरण को पूछती है कि हे कान्त ! इस प्रकार का अलौकिक ज्ञान आपको कैसे प्राप्त हो गया है ? फिर हिरण हिरणी को कहता है कि हे सुन्दर नेत्रों वाली ! यह ज्ञान पुण्य से प्राप्त होता है वह पुण्य आज ही भृगुवंशीय रामजी के दर्शन से लोकोत्तर अव्यक्त

का अनुभव हो रहा है। क्योंकि पुण्यात्मा भृगुनन्दन राम भगवान् श्री कृष्ण जी के भक्तों में अग्रगण्य है।४२०।

**शुश्रूषानिरतो गुरोः प्रतिदिनं नैमित्तिकेष्वादरः**
**पापघ्नं चरितं सुपुण्यदमिदं वक्ष्ये प्रिये! शृण्वताम्।**
**यद्यच्चात्र करिष्यते तदपि नो जातं धियो गोचरं**
**ह्याख्यातोत्तम भक्तिरेव मुनिभिर्या तां विनानेष्यते।४२१**

भावार्थ—यह राम प्रतिदिन गुरु सेवा में संलग्न है। नित्य नैमित्तक कृत्यों में पूर्ण आस्थावान् (निष्ठावान्) है। पापों का नाशक पुण्यप्रद चरित बताता हूं ध्यान से सुनिये। जो जो आचरण आगे करेगा उनका भी हमारी बुद्धि में भान होने लगा है। सब से उत्तम भक्ति जो मुनियों ने कही है उसके विना कभी सफलता नहीं होती।४२१।

**वर्षाणामयुतायुतैरपि भृगुर्मन्त्राढ्यकवचं जपेद्**
**भद्रे! यद्ययमेव भार्गवमुनि गंच्छेदगस्त्यान्तिकम्।**
**तस्यानुग्रहतो लभेदनुपमं श्रीकृष्ण प्रेमामृतं**
**नामस्तोत्रमनुत्तमं त्रिभुवने ज्ञात्वा च भक्तिप्रदम्।४२२।**

भावार्थः—हजारों वर्षों तक परशुराम जी समन्त्रक कृष्णकवच करते रहे। किन्तु हे भद्रे! यदि यही परशुराम अगस्त्य महर्षि के पास जाकर उनकी अपार कृपा को प्राप्त कर अनुपम श्री कृष्ण प्रेमामृत नाम स्तोत्र जो तीनों भुवनों में होने वाले स्तोत्रों से उत्तम है जो उत्तम भक्ति का देने वाला है उसे जानकर सफल होगा।४२२।

**सिद्धिं चास्य समन्त्रकस्य कवचस्यावश्यमुल्लप्स्यते**
**तत्वार्थज्ञमुनिस्त्वनुग्रहवशाज्ज्ञानप्रदः सेत्स्यति ।**
**संसिद्धे कवचे स हैहयनृपं हत्वा कुटुम्बान्वितं**
**निर्भूपामवनीं विधास्यति खलु त्रिः सप्त कृत्वो भृगुः ।४२३**

भावार्थ:—इस कृष्णकवच मन्त्र की सिद्धि अवश्य प्राप्त करेगा तत्वार्थ के ज्ञाता अगस्त्यमुनि जी तो कृपावश अवश्य ज्ञान प्रद सिद्ध होंगे कवच के सिद्ध हो जाने पर यही राम हैहय नरेश को सपरिवार मारकर पृथ्वी को २१ बार राजाओं से रहित अवश्य कर देगा ।४२३।

**पप्रच्छाथ मृगी स्वकान्तमनघं तत्वार्थज्ञानं मुदा**
**जातं भार्गवदर्शनाच्च सकलं ज्ञानं यतोऽतीन्द्रियम् ।**
**आचक्ष्वाखिलकारणं स्वजनुषः सर्वं ममाप्यात्मन-**
**श्चावां केन कुकर्मणेह जनने प्राप्तौ हि तिर्यग्जनिम् ४२४**

भावार्थ —मृगी ने प्रसन्न होकर अपने निर्दोष कान्त मृग को तत्वार्थज्ञान के विषय में पूछा । जिसके प्रभाव से भार्गवराम के दर्शनमात्र से ही अतीन्द्रिय समस्त ज्ञान हो गया है अतः अपने और मेरे जन्म का पूर्ण कारण बतलाइये हम दोनों किस कुकर्म से इस तिर्यग्योनि को प्राप्त हुए हैं ? ।४२४।

**इत्याकर्ण्य मृगीवचो मृगवरः प्रोवाच प्रीत्या मृगीं**
**येनाऽऽवाँ मृगतां गताविह भवे भावो भवे कारणम् ।**

**नानाऋद्धिसभाकुले द्विजकुले देशे पुरा द्राविडे**
**जातः कौशिकगोत्रिणां नयविदां धर्मैकनिष्ठाग्रणीः ।४२५**

भावार्थः—इस प्रकार मृगी के प्रश्न को सुनकर प्रीति से अपनी प्रिया मृगी को बताने लगा जिसके कारण हम दोनों इस जन्म में मृगयोनि में उत्पन्न हुए इस मृग जन्म में आने का भाव ही कारण है अनेक समृद्धियों से सम्पन्न द्रविड देशमें पूर्वजन्म में कौशिक गोत्र के विप्र कुल में शास्त्रज्ञों में एकमात्र धर्मकी निष्ठा में सम्पन्न लोगों में श्रेष्ठ ।४२५।

**तातो मे शिवदत्त इत्यभिधया लोके प्रसिद्धोद्विज–**
**श्चत्वारोऽस्य सुता बवं द्विजवरा श्रीरामधर्मौ पृथु ।**
**सूरीति युगलद्वयं समभवत्सर्वानुपानेष्ट सः**
**वेदाध्यापनतत्परो मम पिता कृत्वा षडङ्गान्वितान् ।४२६**

भावार्थः–शिवदत्तनाम से लोक में प्रसिद्ध ब्राह्मण मेरे पिता थे। इन के चार पुत्र हुए राम और धर्म प्रथम युगल पृथु और सूरि द्वितीय युगल हुआ इस प्रकार चारों पुत्रों में सब से छोटा सूरि मैं ही था। इन सब का यज्ञोपवीत संस्कार भी उन्होंने कर दिया। इन चारों को वेदाध्यापन में तत्पर मेरे पिता ने इन चारों को वेदों के साथ ही षडङ्ग सम्पन्न भी कर दिया ४२६।

**जाता ज्ञानपरायणा निजकुले शुश्रूषणाच्छ्रीगुरोः**
**गत्वारण्यमयेऽन्वहं कुशसमित्पुष्पादि पित्राज्ञया ।**

**आनीयाध्ययनेरताः प्रतिदिनं पित्रोश्च सेवारताः**
**सम्प्राप्ता वयमेकदा घनवने चाद्रि समे चौद्भिदम् ४२७**

भावार्थः—गुरुजनों की सेवा के प्रभाव से निजकुल में चारों पुत्र ज्ञान सम्पन्न हो गये। प्रतिदिन बन में जाकर पिता की आज्ञा से कुश, समिधा पुष्पादि लाकर अपने अध्ययन एवं माता पिता की सेवा में लगे रहते थे एक दिन हम सब घने बन में होते हुए औद्भिद नाम के पर्वत पर जा पहुंचे ४२७।

**सर्वे वै कृतमालिका नदितटे स्नात्वोषसि भ्रातरो**
**दत्तर्घाः कृतनित्यकृत्यनियमान्नत्वाखिला देवताः।**
**आरूढा गिरिमौद्भिदं तरुवरैस्तारस्वरैर्निझरै-**
**र्नानाहिंस्रक जन्तुभिः खगवरैः शृङ्गै लिखन्तञ्च खम् ४२८**

भावार्थ—वहां हम सब भाईयों ने कृतमाला नामकी द्राविड़ नदी के तट पर उषःकाल में स्नान किया सूर्यादि सभी देवताओं को अर्घ्य देकर नित्यकृत्य नियमों से अवकाश मिलने पर सभी देवताओं को नमस्कार कर औद्भिद नामक पावन पर्वत पर चढ गये जो सुन्दर वृक्षों से युक्त अपने शृंगों से मानो आकाश पर कुछ चित्र लिख रहा हो ।४२८।

**नाना कौतुक दृष्टयो वहुरवान्नास्माष्मं स्वं सोदराः**
**स्वात्मानमपि चात्मना भयवशाद् भ्रान्त्या वियुक्ता वयम्।**

आगात्कापि तृषातुरा वनमृगी पातुं जलं निर्झरात्
शार्दूलोऽपीह समागतो विधिवशात्तस्याः पिबन्त्या जलम् ४२९

भावार्थ:—अनेक प्रकार के कौतूहल जनक दृश्यों को देखते हुए बहुत घोर शब्दों द्वारा हम सभी भाई अपने आपको भी भूल गये भयवश एक दूसरे से डरते हुए भ्रान्तिवश एक दूसरे से विछुड़ गये। दैववश एक मृगी प्यास से व्याकुल हो आकर झरने का पानी पीने लगी उसे जल पीती हुई मृगी पर एक व्याघ्र आ धमका।४२९।

भीतां तां जगृहेऽहमपि तत्पश्यन्भयाद्द्रवं
सूच्चत्वात्पतितो मृतो मृगजनिर्लेभे मृगीं संस्मरन्।
तुर्योऽहन्त्विह सूरिनामकवटुर्जाने न मे क्वाग्रजाः ?
त्वं जातासि मृगी मृताहमपि च त्वामन्त्यकाले स्मरन्४३०

भावार्थ:—व्याघ्र ने आते ही डरी हुई मृगी को पकड़ लिया उसको ग्रहण किये देखते ही भय से मैं भाग निकला अत्यन्त उच्च टीले से नीचे गिर पडा नीचे पडते ही मृगी का संस्मरण करता हुआ मर गया अत: मैंने मृग का जन्म प्राप्त किया। चौथा मैं ही सूरि नामक ब्रह्मवटु हूं न जाने मेरे बडे भाई कहां है ? तूंने व्याघ्र द्वारा मर कर पुन: मृगी का जन्म पाया तेरा स्मरण अन्त्यकाल में करके मैं भी मृग हो गया।४३०।

एतन्मे स्मृतिमागतं स्वचरितं भद्रे हि ते चात्मनः
यद्भूतं सभविष्यकं सुनयने तत्ते प्रवक्ष्याम्यहम्।
योऽयं पृष्ठगतोऽस्मदीय मृगयुर्व्याधश्च दूरस्थितः
रामस्यास्य भयादसौ हि हरिणा दैवात्स्वयं भक्षितः ।४३१

भावार्थः—यह अपना चरित मेरी स्मृतिमें आया है जिस में मेरा अपना और तुमारा जो भूत और भविष्य है वह हे सुनयने ! मैं तुमको बताऊंगा। जो हमारे पीछे पड़ा हमे शिकार की इच्छा रखने वाला व्याध है जो दूरस्थ राम के भय से खड़ा था वह स्वयं सिंह ने खालिया है ४३१।

प्राणान्सोऽपि विहाय पुष्कर तटे स्वर्गं ध्रुवं यास्यति
आवाभ्यामपि मध्यपुष्कर भवं पीतं यथेष्टं जलम्।
साक्षाद्दर्शनमागतो भृगुवरो विष्णुस्वरूपोऽधुना
तेनानेकभवोद्भवं हि सकलं नष्टं महापातकम् ।४३२।

भावार्थः—वह व्याध भी पुष्कर तीर्थ के तट पर प्राणत्याग कर अवश्य स्वर्ग को जायेगा। हम दोनों ने भी मध्य पुष्कर के जल को यथेष्ट पीलिया है । साक्षात् विष्णु स्वरूपी राम भगवान् के दर्शन अब कर लिये हैं। उससे अनेक जन्मों में हुए महापातक भी नष्ट हो गये हैं ।४३२।

प्राप्यागस्त्य सुदर्शनं सुगतिदं श्रीकृष्ण प्रेमामृतं
श्रुत्वा ऽऽवां शुभलोकयायिभिरपि प्राप्तुञ्च यद्दुर्लभम्।

**यास्यावस्तत एव येषु गमनात्पौनर्भवान्नो भयं**
**चेत्युक्त्वा प्रियदर्शनः स च मृगीं शान्तश्च तूष्णीं स्थितः ।**

भावार्थः —अगस्त्य के दर्शनों को पाकर जो सुन्दर गति को देने वाले हैं श्रीकृष्ण प्रेमामृत को सुनकर हम दोनों जो गति शुभलोकों में जाने वालों के लिये भी जो दुर्लभ है हम उनलोकों मे ही जाएंगे जहां जिन लोकों में जाने से बार २ पुनर्जन्मो से कभी भय नहीं होगा। इतनी कथा मृगी को सुना कर प्रिय दशन मृग शान्त एवं मौन होकर बैठ गया ४३३।

**पश्यन् रामगनातुरोऽथ परशुः श्रुत्वा मृगोक्तं वचः**
**रामोऽसावकृतव्रणान्वितइतो गन्तुं ह्यगस्त्याश्रमम् ।**
**स्नात्वा नित्य विधिं विधाय चलितश्चेतो भृशं हर्षितो**
**रामेणाध्वनि गच्छतात्र हरिणा व्याधो हतो वीक्षितः ।४३४**

भावार्थ —स्वस्थ चित्त होकर मृग राम को एक दृष्टि से देखता रहा उसके पश्चात् परशुराम ने मृग के वचन को सुनकर अकृतव्रण के साथ यहां से अगस्त्य के आश्रम की ओर जाने के लिये स्नान सन्ध्यादि नित्यकर्मों से अवकाश मिलने पर अत्यन्त हर्षित चित्त होकर चल पड़ा। रामने जाते हुए मार्ग में यहां सिंह के द्वारा मारा हुआ व्याध देखा ।४३४

**साश्चर्यं स कनिष्ठ पुष्करमसौ गव्यूतिमात्रत्रयं**
**गत्वासावधगाह्य पुष्कर जले मध्याह्न सन्ध्यां व्यधात् ।**

**सामोदं हितमात्मनो मृगकथां सञ्चिन्तयंश्चेतसि**
**तावत्पृष्ठगतं स्वतो मृगयुगं प्रत्यक्षमेवागतम् ।४३५।**

भावार्थ:—आश्चर्य से युक्त वह परशुराम चलते तीन गव्यूति (छ: कोस) मात्र जाकर कनिष्ठ पुष्कर के जल में स्नान कर मध्याह्न सन्ध्या की। बडे आनन्द से अपने हित में होने वाली मृग कथा के चिन्तन में लीन हो ही रहा था कि अपने पीछे आते हुए स्वय प्रत्यक्ष में आकर मृग मृगी के जोडे को देखा ।४३५

**पीत्वा पावनपुष्करेऽद्भुतजलं स्वासिञ्च्य देहं जलं**
**रामस्यास्य हि पश्यतो भगवतो ह्यागादगस्त्याऽऽश्रमम् ।**
**सन्ध्यान्ते भृगुनन्दनोऽपि सहसागस्त्याश्रमञ्चाभ्यगाद्**
**रामो वै ह्यकृतव्रणान्वित इहागत्याश्रमं प्राविशत् ।४३६**

भावार्थः—मृग मृगी के युगल ने पावन पुष्कर तीर्थ में जल पीकर अपने शरीर को जल से अभिषिञ्चित करके रामजी के देखते देखते ही भगवान् अगस्त्य के आश्रम में आ पहुंचा। सन्ध्या के पश्चात् परशुराम जी भी अगस्त्याश्रम में आगये। रामने भी अकृतव्रण के साथ अगस्त्याश्रम में प्रवेश किया ।४३६।

**विष्णोर्वामनपादजं सुरनदी कुण्डं मुनीशैर्युतं**
**यत्रागाच्च सरस्वती भगवती ब्रह्मात्मजा भारती ।**
**पूर्वं पूरणहेतवे भगवतो ह्यग्नेस्त्रिकुण्डान्विधे-**
**स्तत्रास्या हि सरस्वती नदितटे ऽगस्त्याश्रमं ददृशे ।४३७**

भावार्थ:—विष्णु भगवान् के वामनावतार में ब्रह्माजी ने विराट् के पाद प्रक्षालन करते वहां गङ्गाकुण्ड नागों एवं सप्तर्षियों से आज भी प्रसिद्ध है यहां सरस्वती ब्रह्मा की पुत्री ब्रह्मा जी के अग्निहोत्र के तीन कुण्डों को भरने के लिये आई थी। इसी सरस्वती नदी के तट पर परम पावन अगस्त्य जी का आश्रम दिखाई दिया ४३७।

**शान्तं ब्रह्ममयं महामुनिवरं ब्रह्मैक ध्यानान्वितं**
**नत्वागस्त्यमुनीश्वरं भृगुवरः स्वनामगोत्रे स्मरन्।**
**आशीर्भिरभिनन्द्य राममनघं पप्रच्छ कुशलं पितुः**
**पूज्याद्य तव दर्शनात्सुकुशलं मे विद्यते सर्वतः ।४३८।**

भावार्थ.—शान्त, ब्रह्मस्वरूप, महर्षिवर, ब्रह्मके एकमात्र ध्यान में लीन अगस्त जी को भार्गवराम ने अपना नाम गोत्रादि उच्चारण करते हुए प्रणाम करके अगस्त्य महामुनि जी ने भी आशीर्वाद सहित अभिनन्दन कर रामजी को पिता जमदग्नि का भी कुशल पूछा। और राम ने कहाकि हे पूज्य आज तुमारे दर्शनों की कृपा से सब ओर से मेरी कुशलता है ४३८।

**किन्त्वेकं त्विह संशयं हि भगवन् छिन्धि स्ववचनामृतैः**
**दृष्टो मध्यमपुष्करे भृगुवरश्चैको मया ह्यद्भुतः।**
**वृत्तं तेन मदीयमुक्तमखिलं भूतं तथानागतम्**
**तच्छ्रुत्वा चकितोऽभवं हि भवतः शरणं समभ्यागतः ४३९**

भावार्थ:—हे भगवन् किन्तु एक ही संशय है जिसे आप अपने वचनामृत के द्वारा काट दें मध्यम पुष्कर में मैंने एक मृग देखा उसमे मेरा भूत एवं अनागत सभी वृत्त कह दिया उसको सुनकर मैं अत्यन्त चकित होकर आपकी शरण में आ गया हूं ।४३९।

**पाहि त्वं ह्यनुकम्पया हि भगवन् संसाधयन्तं मनुँ**
**दत्तं तत्कवचं शिवेनगुरुणा कृष्णस्य साक्षाद्धरेः ।**
**यातं तच्छरदांशतं मम गुरो ! सिद्धिं न प्राप्तोऽस्म्यहं**
**का बाधा मनुसाधनेऽद्य कृपया त्वं ब्रूहि तन्मे प्रभो! ४४०**

भावार्थ:—हे भगवन् ! अपनी अपार अनुकम्पा से मेरी रक्षा कीजिये। जगद्गुरु भगवान् शङ्कर जी ने मुझे साक्षात् भगवान् कृष्ण जी का अद्भुत कवच दिया उस मन्त्र का साधन करते २ हे गुरुदेव ? सौ वर्ष वीत चुके हैं कवच की सिद्धि प्राप्त नहीं कर पाया हूं। कौन सी वाधा मेरे मन्त्र साधन में आगयी है वह आज कृपा करके हे प्रभो ! मुझे वास्तविक मार्ग प्रदर्शन कीजिये ।४४०।

**श्रुत्वा ध्यानपरायणः क्षणमसौ ज्ञात्वा मृगोक्तं हृदा**
**मृग्या सार्धमुपागतं मृगमपि श्रेष्ठे मुनेः स्वाश्रमे ।**
**श्रोतुं कृष्णरसायनं स्तवमयं श्रीकृष्ण प्रेमामृतं**
**सर्वं वै तत्कारणं मुनिवरः सिद्धो ह्यगस्त्यः स्वयम् ।४४१**

भावार्थ –राम की प्रार्थना सुनकर कुछक्षण ध्यान में रह कर मृग के द्वारा प्रोक्त समस्त राम के वृत्त को हृदय के द्वारा जानकर उसी समय मृगी के साथ मृग के भी अपने कर्णों को तृप्त करने के लिये कृष्ण रसायनस्वरूप श्रीकृष्ण प्रेमामृतस्तोत्र को सुनने के लिये उसी श्रेष्ठ अगस्त्याश्रम में आपहुंचे इस समग्र वृत्तान्त के मूल कारण स्वयं भगवान् अगस्त्य महाराज ही सिद्ध होते हैं ।४४१।

रामं प्राह मुनीश्वरो घटभवः प्रीत्या शृणु त्वं भृगो !
दैवाद्दर्शनकांक्षया भगवतोऽनन्तस्य श्रीविग्रहम् ।
पातालं मुनिसिद्धसेवितमहं प्राप्तोऽस्मि हर्षान्वितः
स्वद्राक्षं मणिभिः प्रदीप्त भवने सिंहासने ऽध्यासितम् ।४४२

भावार्थ —मुनीश्र अगस्त्य जी ने राम को प्रीति से कहा कि हे भृगो ! दैववश एक बार भागवान् अनन्त महाराज जी के श्रीविग्रह के दर्शनों की आकांक्षा से मुनिसिद्धादि से युक्त पाताल में हर्षोल्लास से युक्त होकर जा पहुंचा वहां बड़ी चमकीली मणियों से दीप्त भवन में सिंहासन पर विराजमान अनन्त जी के दर्शन किये ।४४२

नत्वा श्रीमदनन्तविग्रहमहं संस्तूयमानं सुरैः
शृण्वानो समुपासते बहुमता वात्स्यायनाद्याः कथाः ।
यद्यत्पृच्छति मेदिनी फणधरं शृण्वन्ति तत्तत्समे
ह्यश्रौषं तदनुग्रहादहमपि श्री कृष्णप्रेमामृतम् ।४४३।

भावार्थ :—देवताओं के द्वारा स्तुति किये जाते हुए श्रीमद् अनन्त भगवान् के श्रीविग्रह को नमस्कार करके देखाकि सर्वसम्मत महर्षि वात्स्यायनादि सिद्ध महासिद्ध ऋषि मुनि लोग वैष्णवी कथाओं को सुनते हुए उनकी उपासना कर रहे थे जो जो पृथ्वी शेष जी को पूछती थी उनके उत्तर के रूप में सभी सुनते थे उनकी अपार कृपा से मैंने भी "श्रीकृष्ण प्रेमामृत को सुना ।४४३।

**श्रुत्वानन्तकथाः प्रहृष्ट हृदया पप्रच्छ भूयो मही**
**यद्यत्कृष्णविचेष्टितं हि भगवन् तत्तच्छ्रुतं श्रद्धया ।**
**लीलाविग्रह धारिणो भगवतः कृष्णस्य देवस्य च**
**नामानीह जयावहानि सुतरां तच्छ्रोतु कामास्म्यहम्** ।४४

भावार्थ—अनन्त भगवान् से कथाओं को सुनकर अत्यन्त प्रसन्न हृदय होकर पृथ्वी माता ने पुनः प्रश्न किया कि हे भगवन् ! जो जो कृष्ण जी के किये हुए लीलामय चरित हैं उन सभी को अतिश्रद्धा से सुना है । लीलामय मानव देह धारियों में श्रेष्ठ भगवान् कृष्ण जी के जय प्रदान करने वाले जितने नाम हैं और उन कृष्ण नामों को सुनना चाहती हूं ।४४४।

।। ॐ श्रीकृष्ण प्रेमामृत स्तोत्र का विनियोग ।

ॐ अस्य श्रीकृष्ण प्रेमामृतमष्टोत्तरशतनाममालामन्त्रस्य सहस्रशीर्ष शेष ऋषिः अनुष्टुप्छन्दः श्रीकृष्णपरमात्मा देवता श्रीकृष्णपरमेश्वरस्य प्राप्तिद्वारा श्रीकृष्णनाममाला जपे विनियोग

## श्रीकृष्णप्रेमामृतमष्टोत्तर शतनामस्तोत्रम्

॥ श्रीशेष उवाच ॥

वसुन्धरे वरारोहे जनानामस्ति मुक्तिदम् ।
सर्वमंगलमूर्द्धन्यमणिमाद्यष्टसिद्धिदम् ॥१॥

महापातककोटिघ्नं सर्वतीर्थफलप्रदम् ।
समस्तजपयज्ञानां फलदं पापनाशनम् ॥२॥

शृणु देवि प्रवक्ष्यामि नाम्नामष्टोत्तरं शतम् ।
सहस्रनाम्नां पुण्यानां त्रिरावृत्त्या तु यत्फलम् ॥३॥

एकावृत्त्या तु कृष्णस्य नामैकं तत्प्रयच्छति ।
तस्मात्पुण्यतरं चैतत्स्तोत्रं पातकनाशनम् ॥४॥

नाम्नामष्टोत्तरशतस्याहमेव ऋषिः प्रिये ।
छन्दोऽनुष्टुब्देवता तु योगः कृष्णप्रियावहः ॥५॥

श्रीकृष्णः कमलानाथो वासुदेवः सनातनः ।
वसुदेवात्मजः पुण्यो लीलामानुषविग्रहः ॥६॥

श्रीवत्सकौस्तुभधरो यशोदावत्सलो हरिः ।
चतुर्भुजात्तचक्रासिगदाशंखाद्युदायुधः ॥७॥

देवकीनन्दनः श्रीशो नन्दगोपप्रियात्मजः ।
यमुनावेगसंहारी बलभद्रप्रियानुजः ।८।
पूतनाजीवितहरः शकटासुरभंजनः ।
नन्दव्रजजनानन्दी सच्चिदानन्दविग्रहः ।९।
नवनीतविलिप्ताँगो नवनीतनटोऽनघः ।
नवनीतलवाहारी मुचकुन्दप्रसादकृत् ।१०
षोडशस्त्रीसहस्रेशस्त्रिभंगी मधुराकृतिः ।
शुकवागमृताब्धीन्दुर्गोविन्दो गोविदां पति ।११
वत्सपालनसंचारी धेनुकासुरमर्द्दनः ।
तृणीकृततृणावर्त्तो यमलार्जुनभंजनः ।१२
उत्तालतालभेत्ता च तमालश्यामलाकृतिः ।
गोपगोपीश्वरो योगी सूर्यकोटिसमप्रभः ।१३
इलापतिः परंज्योतिर्यादवेन्द्रो यदूद्वहः ।
वनमाली पीतवासाः पारिजातापहारकः ।१४।
गोवर्द्धनाचलोद्धर्त्ता गोपालः सर्वपालकः ।
अजो निरंजनः कामजनकः कंजलोचनः ।१५।
मधुहा मथुरानाथो द्वारकानाथको बली ।
वृन्दावनान्तसंचारी तुलसीदामभूषणः ।१६।

स्यमन्तकमणेर्हर्त्ता नरनारायणात्मकः ।
कुब्जाकृष्टाम्बरधरो मायी परमपूरुषः ।१७।
मुष्टिकासुरचाणूरमल्लयुद्धविशारदः ।
संसारवैरी कंसारिर्मुरारिर्नरकान्तकः ।१८।
अनादि ब्रह्मचारी च कृष्णाव्यसनकर्षकः ।
शिशुपालशिरश्छेत्ता दुर्योधनकुलान्तकृत् ।१९।
विदुराक्रूरवरदो विश्वरूपप्रदर्शकः ।
सत्यवाक्सत्यसंकल्पः सत्यभामारतो जयी ।२०।
सुभद्रापूर्वजो विष्णुर्भीष्ममुक्तिप्रदायकः ।
जगद्गुरुजगन्नाथो वेणुवाद्यविशारदः ।२१।
वृषभासुरविध्वंसी बकारिर्बाणबाहुकृत् ।
युधिष्ठिरप्रतिष्ठाता बर्हिबर्हावतंसकः ।२२।
पार्थसारथिरव्यक्तो गीतामृतमहोदधिः ।
कालीयफणिमाणिक्यरंजितः श्रीपदाम्बुजः ।२३।
दामोदरो यज्ञभोक्ता दानवेन्द्रविनाशनः ।
नारायणः परं ब्रह्म पन्नगाशनवाहनः ।२४।
जलक्रीडासमासक्तगोपीवस्त्रापहारकः ।
पुण्यश्लोकस्तीर्थपादो वेदवेद्यो दयानिधिः ।२५।

सर्वतीर्थात्मकः सर्वग्रहरूपी परात्परः ।
इत्येवं कृष्णदेवस्य नाम्नाष्टोत्तरं शतम् ।२६।
कृष्णेन कृष्णभक्तेन श्रुत्वा गीतामृतं पुरा ।
स्तोत्रं कृष्णप्रियकरं कृतं तस्मान्मया श्रुतम् ।२७।
कृष्णप्रेमामृतं नाम परमानन्ददायकम् ।
अत्युपद्रवदुःखघ्नं परमायुष्य वर्द्धनम् ।२१।
दानं व्रतं तपस्तीर्थं यत्कृतं त्विहजन्मनि ।
पठतां शृण्वतां चैव कोटिकोटिगुणं भवेत् ।३०।
पुत्रप्रदमपुत्राणामगतीनां गतिप्रदम् ।
धनावहं दरिद्राणां जयेच्छूनां जयावहम् ।३१।
शिशूनाँ गोकुलानां च पुष्टिदं पुण्यवर्द्धनम् ।
वालरोगग्रहादीनां शमनं शान्तिकारकम् ।३२।
अन्ते कृष्णस्मरणद भवतापत्रयापहम् ।
असिद्धसाधकं भद्रे जपादिकरमात्मनाम् ।३३।
कृष्णाय यादवेन्द्राय ज्ञानमुद्राय योगिने ।
नाथाय रुक्मिणीशाय नमो वेदान्तवेदिने ।३४।
इमं मन्त्र महादेवि जपन्नेव दिवानिशम् ।
सर्बग्रहानुग्रहभाक्सर्वप्रियतमो भवेत् ।३५।

पुत्रपौत्रैः परिवृतः सर्वसिद्धिसमृद्धिमान् ।
निषेव्य भोगानन्तेऽपि कृष्णसायुज्यमाप्नुयात् ।३६।

अगस्त्य उवाच

एतावदुक्तो भगवाननन्तो मूर्त्तिस्तु संकर्षणसंज्ञिता विभो ।
धराधरोऽलं जगतां धरार्थं निर्दिश्य भूयो विरराम मानदः।३७

ततस्तु सर्वे सनकादयो ये समास्थितास्तत्परितः कथादृताः
आनन्द पूर्णाम्बुनिधौ निमग्नाः सभाजयामासुरहीश्वरं तम्३८

ऋषय ऊचुः

नमो नमस्तेऽखिलविश्वभावन प्रपन्नभक्तार्तिहराव्ययात्मन्
धराधरायापि कृपार्णवाय शेषाय विश्वप्रभवे नमस्ते ।३९

कृष्णामृतं नः परिपायितं विभो विधूतपापा भवताकृतावयम्
भवादृशा दीनदयालवो विभो समुद्धरन्त्येव निजान्हिसन्नतान्

एवं नमस्कृत्य फणीश पदयोर्मनो विधायाखिलंकामपूरयोः ।
प्रदक्षिणीकृत्य धराधराधरं सर्वे वयं स्वावसथानुपागताः ४१

इति तेऽभिहितं राम स्तोत्रं प्रेमामृताभिधम् ।
कृष्णस्य परिपूर्णस्य राधाकान्तस्य सिद्धिदम् ४२

इदं राम महाभाग स्तोत्रं परमदुर्लभम् ।
श्रुतं साक्षाद्भगवतः शेषात्कथयतः कथाः ।४३।

यावन्ति मन्त्रजालानि स्तोत्राणि कवचानि च ।
त्रैलोक्ये तानि सर्वाणि सिद्ध्यन्त्येवास्य शीलनात् ४४

वसिष्ठ उवाच

एवमुक्त्वा महाराज कृष्णप्रेमामृतं स्तवम् ।
यावद्व्यरंसीत्स मुनिस्तावत्स्वर्यानमागतम् ।४५।

चतुर्भिरद्भुतैः सिद्धैः कामरूपैर्मनोजवैः ।
अनुयातमथोत्प्लुत्य स्त्रीपुंसौ हरिणौ तदा ४६।

अगस्त्यचरणौ नत्वा समारुरुहतुर्मुदा ।
दिव्यदेहधरौ भूत्वा शंखचक्रादिचिह्नितौ ।४७।

गतौ च वैष्णवं लोकं सर्वं देवनमस्कृतम् ।
पश्यतां सर्वभूतानां भार्गवागस्त्ययोस्तथा ।४८।

इति श्रीब्रह्मांडे महापुराणे वायुप्रोक्ते मध्यभागे तृतीय उपोद्घातपादे भार्गवचरिते श्रीकृष्ण प्रेमामृतमष्टोत्तरशतनाम स्तोत्राख्याने षट्त्रिंशत्तमोऽध्यायः ।

स्तोत्राख्यानपरायणो मुनिवरो यावद् व्यरंसीदसौ
तावदेवसमागतं गगनतो सिद्धैश्चतुर्भिर्युतम् ।
स्वर्यानं च मनोजवैः स्मरमयैः पुम्भिर्युतं चाद्भुतै-
र्नत्वर्षेश्चरणावथाऽऽरुरुहतुस्तौ दम्पती ह्युत्प्लुतौ ।४४

भावार्थः—स्तोत्राख्यान में लगे हुए मुनिवर अगस्त्त जी ने जब विराम किया तो तभी आकाश से अद्भुत चार सिद्ध पुरुषों से युक्त एक स्वर्ग का व्योमयान (विमान) आगया उसी समय अगस्त्य मुनि जी के चरणों को स्पर्शकर दोनों दम्पती (मृगीमृग) उछल कर विमान पर चढ गये ४४५।

तौस्वर्गीयवपुर्धरौ मृगीमृगौ सच्छंखचक्रान्वितौ
यातौ वैष्णव लोकपावनमिमौ देवैर्नुतं सर्वदा।
भूतानामिह पश्यतां प्रवरयोः श्री भार्गवागस्त्ययोः
दृष्ट्वासौ महदद्भुतं सपरशुः स्वाश्चर्य युक्तोऽभवत्।४४६

भावार्थ—वे दोनों स्वर्गीय शरीर धारण किये मृगदम्पती शंखचक्र चिह्नों से युक्त होकर सभी देवतओं से नमस्कृत वैष्णव नामक परमपावन धाम में चले गये। यह चमत्कार सभी प्राणी और भार्गवराम एवं महामुनि अगस्त्य के देखते २ उनके पावनलोक की यात्रा को देखकर परशुराम अत्याश्चर्य से युक्त हो गया।४४६।

प्रोवाचाखिलवृत्तमद्भुतमदः पर्शुर्मृगास्याच्छ्रुतम्
तच्छ्रुत्वा घटसम्भवो मुनिवरः प्रोवाचपर्शुर्भृवा।
विष्णोर्न्यस्तपदानि वै सुरनदी श्रीवामनाङ्घ्रयुद्भवा
पादाग्रात्क्रमतो बलेर्विनिग्रहे लोकान्निहैव स्वयम्।४४७।

भावार्थः—परशुराम ने मृग के मुख से जो कुछ सुना था वह सब का सब वृतान्त महर्षि अगस्त्य जी को सुना दिया। उसे

सुनकर अगस्त्य जी ने प्रसन्न हो परशुराम को कहाकि भगवान् विष्णु के पदचिह्न यहां लगे हैं अर्थात् वामनावतार के ब्रह्मा के चरण पखारते साक्षात् गङ्गा की उत्पत्ति हुई। पाओं के अग्रिम भाग से तीनों लोकों पर पदार्पण कर वलि के निग्रहण स्वयं यहीं हुआ था।४४७।

**गत्वा मासमनन्यधीः स्तवमिदं नित्यं पठस्त्वाधुना**
**ह्यभ्यस्तं कवचं त्वया नियमतः सिद्धिं च ते यास्यति।**
**इत्युक्तो घटयोनिना स परशुर्नत्वा मुनिं सादरं**
**निर्यातो बाहिराश्रमात्पुनरसौ प्राप्तः स गङ्गायनम्।४४८**

भावार्थः—अब हे राम! उस पुण्य स्थान पर जाकर अनन्य बुद्धि से मासभर नियमतः इसस्तव को पढो जो कवच आपने सौ वर्ष अभ्यास कर रखा है वह स्वयं सिद्ध हो जायेगा। इस प्रकार मुनि का आदेश सुनकर परशुराम मुनि को सादर प्रणाम कर मुनि के आश्रम से निकल कर गङ्गा जी की उत्पत्ति के स्थान पर पहुंच गया।४४८।

**तत्रासावकृत व्रणेन सहितश्चाभ्यस्य दिव्यं स्तवं**
**नित्यन्तस्य रसेश्वरस्य नियमाच्छ्रीकृष्ण प्रेमामृतम्।**
**तुष्टोऽसौ भगवान्स्वयं व्रजपतिः प्राप्तो भृगोर्दर्शनं**
**वंशीवादन तत्परः नटवरः श्रीकृष्णलीलाधरः।४४९।**

भावार्थः—वहां उस परशुराम ने अकृतव्रण के साथ रहते मासभर नियमित रूप से कृष्ण प्रेमामृतस्तव का अभ्यास करते

पुरश्चरण किया उस से प्रसन्न होकर वंशीवादन में निपुण लीलाधारी नटवर व्रजेश्वर भगवान् कृष्ण परशुराम के सन्मुख स्वयं साक्षात् प्रकट हो गये ।४४६।

**तं दृष्ट्वा सहसोत्थितः स परशुः श्रीकृष्णदेवं मुदा**
**साष्टाङ्गं प्रणिपत्य गोकुलपतिं तुष्टाव बद्धाञ्जलिः ।**
**कृत्स्नं रासरसायनं स्वहृदिभूपद्मालबालाङ्गने**
**वंशीरागरसायनेऽद्भुतपटुं गोलोककृष्णं भजे ।४५०।**

भावार्थ—प्रसन्नता से उस भगवान् कृष्ण के दर्शन कर गोकुलेश्वर को साष्टाङ्ग प्रणामकर बद्धाञ्जलि होकर स्तुति करने लगा । मैं अपने हृदय कमल के आलबालाङ्गन में समग्र रासरसायन के मूल स्वरूप वंशी के राग में से रसायन प्रदर्शन में अद्भुतपटु भगवान् गोलोक धामवासी कृष्ण का ध्यान करता हूं ।४५०।

**श्रुत्वा रामकृतां स्तुतिं च विनतं कृष्णः प्रहृष्टोऽब्रवीत्**
**सिद्धं तेऽखिल कार्यमुत्तममदः सत्स्तोत्रवर्मा श्रयात् ।**
**हत्वा तं कृतवीर्यनन्दननृपं दृप्तं ह्यसन्मानसं-**
**भारञ्च क्षितिशेषयोः परिहरन् पूर्णां प्रतिज्ञां कुरु ।४५१**

भावार्थः—राम की की हुई स्तुति को सुनकर उसे विनत देखकर कृष्ण जी प्रसन्न होकर राम को कहते हैं कि तुमारा समस्त कार्य सिद्ध हुआ । वास्तविक प्रेमामृतस्तोत्र और समन्त्रक

कवच के सहारे कार्य सिद्धि उत्तम हुई। कृतवीर्य नन्दन राजा सहस्रबाहु को मारकर जो अत्यन्त घमण्ड से युक्त दुष्ट चित्त हो गया है। भूमि और शेषनाग का पापमय भार हलका करो। उसके साथ ही अपनी घोर प्रतिज्ञा भी पूरी करो।४५१।

सोऽयं हैहयभूपतिर्भुवितले चक्रावतारो मम
दृप्तं दत्तवरात् समापय मुने! धर्मे विरुद्धं नृपं।
अंशावेश वशेन मेऽत्र परशो! लोकेऽवतारो भवान्
अद्यारभ्य चरिष्यतीह भगवन्! कर्त्ता च हर्त्ता स्वयम्।४५२

भावार्थ—यह जो हैहय नरेश सहस्रबाहु है यह मेरे चक्र का अवतार है। दत्तात्रेय जी के वर से यह अत्यन्त घमण्डी हो गया है अतः हे मुने! इसे समाप्त करदो यह धर्मक्षेत्र में विरुद्ध हो गया है। हे परशुराम! मेरा पूर्णरूप से आप में अंशावेश हो गया है अब आप लोक में अवतार हो गये हैं। आज से लेकर हे भगवन्! आप कर्त्ता हर्ता स्वयं प्रभु होकर संचार करने योग्य हो गये हो।४५२।

त्रेतान्ते रघुवंशजः स्वयमहं रामो ह्ययोध्योद्भवः
कौशल्योदर सम्भवो दशरथाज्जातश्चतुर्व्यूहभूः।
आदौ कौशिकयज्ञरक्षणविधौ श्रीलक्ष्मणेनान्वितो
यास्येतो मिथिलांपुरीं स्वगुरुभिर्निर्भज्य शैवं धनुः।४५३।

भावार्थः—त्रेतायुग के अन्त में अयोध्यानरेश राजारघु के वंश में राजादशरथ की पटरानी कौशल्या के गर्भ से उत्पन्न चतुर्व्यूहावतार राम लक्ष्मण, भरत, शत्रुघ्न के रूप में अवतार लूंगा । सर्वप्रथम रामरूप में मैं लक्ष्मण के साथ विश्वामित्रमहर्षि की यज्ञरक्षा के निमित्त आकर राक्षसों से यज्ञ की रक्षा सिद्ध कर अपने गुरु विश्वामित्र के साथ मिथिला नगरी में शिव धनुष का भंग करके ४५३

**वैदेहीं परिणीय सोदरचतुर्व्यूहं प्रतिग्राह्यवं**
**यास्यन्नेवमयोध्यकां जनिभुवं तेजोगृहीत्वोन्मदम् ।**
**शान्तस्त्वं हि निरुन्मदः पुनरहो प्राप्याथ क्षेत्राद्भृगो-**
**स्तेजो वैष्णव संज्ञकं त्वयि सदा कृष्णस्ततोऽन्तदधे ४५४।**

भावार्थ —राम, लक्ष्मण, भरत, शत्रुघ्न इस प्रकार चतुर्व्यूहावतार एक साथ सीतादि चारों जनक की कन्याओं के साथ विवाह होने पर अयोध्यापुरी जन्मभूमि की ओर आते समय रास्ते में हे परशुराम ! आपके साथ मिलाप होते समय सहस्रबाहु आदि के मारने का उन्माद भटका होगा क्षात्रवैष्णव तेज भी भटक उठेगा उसी विवाद में आपका वैष्णव तेज एवं उन्मद मैं लेलूंगा। आप शान्त होकर भृगुक्षेत्र में पहुंचते ही भृगु जी के तपस्थल में पुनः वैष्णव तेज को प्राप्त होकर आप को स्मर्तृगामी सिद्धि प्राप्त होगी। इस प्रकार भविष्य ज्ञान देकर भगवान् कृष्ण जी अन्तर्धान हो गये।४५४।

जब परशुराम ने अपने परशु से गणेश जी पर प्रहार किया तो गणेश जी ने बडी शान्ति से उस पिता जी के दिये हुए परशुनामक अस्त्र का तिरस्कार न करके बड़े प्रेम से अपने दन्त से प्रहार को सहन कर लिया उस से गणेश जी का दन्त जड से निकल कर भयङ्कर शब्द करता हुआ भूमि पर गिरा तो महादेवी माता जी अत्यन्त क्रुद्ध होकर बोलीकि महादेव जी को एक ही राम गणेश स्कन्द दोनों जैसा शिष्य एवं पुत्र मिल गया है इन के दिये परशु से इनके ही बच्चों पर प्रहार कर रहा है इन के लिये एक ही पुत्र पर्याप्त है, मैं अपने गणेश और स्कन्द दोनों को लेकर कहीं अन्यत्र चली जाती हूं किन्तु इसको अब क्षमा नहीं करूंगी अत्यन्त क्रुद्ध होकर परशुराम जी को मारने के लिये उतारु हो गयी। तब महादेव जी ने सपरिवार राधासहित गोलोकाधिष्ठित श्री कृष्ण जी का ध्यान किया।

**क्रुद्धां वीक्ष्यनगात्मजां शिवविभुः सस्मार कृष्णं प्रभुं**
**राधादामयुतः सकृष्णभगवान् सद्यो हि तत्रोत्थितः।**
**हृष्टः शम्भुरसौ प्रणम्य चरणावभ्यर्च्य सिंहासने**
**भक्त्या वै सुनिवेश्य दारसहितं कृष्णं च गोलोकपम्।४५५**

भावार्थः—महादेवी पार्वती को क्रोधावेश में देखकर भगवान् शङ्कर जी ने भगवान् जी का सपरिवार स्मरण किया तो तत्क्षण दामा सहित राधाकृष्ण जी वहीं प्रकट हो गये। उनको प्रत्यक्ष देखकर भगवान् शंकर जी ने प्रसन्न होकर चरणों को प्रणाम एवं पूजा सत्कारादि के पश्चात् अत्यन्त भक्तिभाव

से सिंहासन पर सपरिवार गोलोकपति कृष्ण जी को बैठा देने के बाद ४५५।

**प्राप्तासौ नगनन्दिनी सुतयुता नत्वाङ्घ्रियुग्मन्तयोः**
**रामोसौ नतकन्धरोऽपि सहसा गौर्याः पदोश्चापतत् ।**
**सा गौरीर्नयदाभ्यनन्ददमुकं प्रणतंपुरा भार्गवं**
**प्रोवाचाथ सगोपिनाथ भगवान् गौरीं गिराप्रीणयन् ।४५६**

भावार्थः—दोनों पुत्रों सहित पार्वती जी ने पहुंच कर राधाकृष्ण जी का चरणस्पर्श किया तो परशुराम भी नतग्रीव होकर माता पार्वती जी के चरणों में गिर पड़ा । उस समय सामने चरणों में पड़े हुए परशुराम का अभिनन्दन वाद नहीं किया तो गोपीनाथ भगवान् श्रीकृष्ण जी ने मधुर वाणी से पार्वती जी को प्रसन्न करना प्रारम्भ कर दिया ।४५६।

**अयि नगनन्दिनिनिन्दितचन्द्रमुखित्वमिमं जमदग्निसुतं**
**नय निजहस्त सरोज समर्पित मस्तकमङ्कमनन्तगुणम् ।**
**भवभयहारिणि! शम्भुविहारिणि कल्मष नाशिनि कुम्भिगते**
**तव चरणे पतितं सततं कृतकिल्विषमप्यव देहि वरम् ।४५७**

ब्रह्माण्डपुराणे ❀

भावार्थः—हे गिरिराजनन्दिनि ! अपने मुख के सौन्दर्य से चन्द्रमा

---

❀ चन्द्रमुखी छन्दः—
नगणमुखै रसभावितजश्चलगैर्विकृतिव्रज चन्द्रमुखी ।
गण-न ज ज ज ज ज ज लगु २३ वर्णवृत्त विकृति जाति ।

निन्दित कर देने वाली ! इस जमदग्नि पुत्र राम को अपने करकमलों से लेकर अपनी गोद में रखकर अनन्त गुण प्रदान करो। संसार के भय को दूर करने वाली शम्भु के साथ रहने वाली ! पापों की नाशकर्त्री ! गजगामिनी ! तुमारे चरणों पर गिरे हुए अपराधी होने पर भी इसकी रक्षा करो और इसे अपने वर से कृतार्थ करदो।४५७

## ※ श्रीकृष्ण उवाच ※

प्रमथानां गणा ये च नाना रूपा महाबला।
तेषामीशस्त्वयं यस्माद् "गणेश"स्तेन कथ्यते।१।

भूतानि च भविष्याणि वर्त्तमानानि यानि च।
ब्रह्माण्डान्यखिलान्येव यस्मिं "ल्लम्बोदरः" स तु।२।

यः शिरो दैवयोगेन छिन्नं संयोजितं पुनः।
गजस्य शिरसा देवि तेन प्रोक्तो "गजाननः"।३।

चतुर्थ्यामुदितश्चन्द्रो दर्भिणा शप्त आतुरः।
अनेन विधृतो भाले "भालचन्द्र" स्ततोऽभवत् ४

शप्तः पुरा सप्तभिस्तु मुनिभिः संक्षयं गतः।
जातवेदा दीपितो ऽभूद्येनासौ "शूर्पकर्णकः" ।५।

पुरा देवासुरे युद्धे पूजितो दिविषद्गणैः।
विघ्नं निवारयामास "विघ्ननाश"स्ततः स्मृतः।६।

अद्यायं देवि रामेण कुठारेण निपात्य च।
दशनं दैवतो भद्रे "ह्येकदन्तः" कृतोऽमुना ।७।

भविष्यत्यथ पर्याये ब्रह्मणो हरवल्लभः।
वक्री भविष्यत्तुण्डत्वा "वक्रतुण्ड": स्मृतो बुधैः ८।

एव तवास्य पुत्रस्य सन्ति नामानि पार्वती।
स्मरणात्पाप हारीणि त्रिकालानुगतान्यपि ।९।

अस्मात्त्रयोदशोकल्पात्पूर्वस्मिन् दशमोभवे।
मयास्मै तु वरो दत्तः सर्वदेवाग्रपूजने ।१०।

जातकर्मादि संस्कारे गर्भाधानादिकेऽपि च।
यात्रायां च वणिज्यादौ युद्धे देवार्चने शुभे ।११।

संकष्टे कामसिद्ध्यर्थं पूजयेद्यो गजाननम्।
तस्य सर्वाणि कार्याणि सिद्ध्यन्त्येव न संशयः ।१२।

। इति गणेशनामाष्टकस्तोत्रं सम्पूर्णम् ।।

इस प्रकार गणेश जी का अक्षय महत्व भगवान् कृष्ण जी से पार्वतीजी सुनकर अतीव विस्मित हो गई उत्तर नहीं दिया तब राधा ने कहा- हे देवि मेरा और आपका. कृष्ण और शिव का परस्पर कोई भेद नहीं विष्णु का हृदय शिव, शिव का विष्णु है अत. शैव वैष्णव मत में भी परस्पर कोई भेद नहीं। इसी प्रकार यह वैष्णव

परशुराम शैवभाव को प्राप्त हो गया है। एवं यह गणेश साक्षात् शिव होता हुआ भी अब वैष्णव भाव को प्राप्त हो गया है।

**कृष्णोक्तं स्तवमुत्तमं गणपतेः श्रुत्वागजा विस्मिता**
**प्रादान्नैव यदोत्तरं भगवती मौनी शिवस्यान्तिकम्।**
**राधाप्राह सनातनी शिवमयी ह्यव्यक्त पुरुषावुभा—**
**वन्योऽन्याश्रयविग्रहौ प्रकटयेते स्वत्र भिन्नौ द्विधा।४५८।**

भावार्थ:—श्रीकृष्ण जी के मुखारविन्द से गणेश जी के उत्तम स्तोत्र को सुनकर पार्वती जी अत्यन्त विस्मित हुई। जब भगवती ने कोई उत्तर नहीं दिया मौन होकर शिवजी के पास बैठी रही। यह देख शिवमयी सनातनी राधा जी कहने लगी कि प्रकृति पुरुष दोनों की आकृतिएं परस्पर अन्योऽन्याश्रय सम्बन्ध रखती हुई भी भिन्न होकर दो प्रकार की प्रकट होकर अपने आपको प्रकाशित करती है।४५८।

**यत्त्वं चाहमिहावयोः क्वचिदहो कश्चिन्न भेदोद्वयोः**
**बिष्णुत्वं नगजे ऽहमस्मि सशिवो द्वैगुण्यभावं गतः।**
**विष्णुर्वै हृदये शिवःस्य परमं रूपं भवत्याः स्थितः**
**विष्णोश्च हृदये शिवः स्वयमसौ रूपं समास्थाय मे ४५९**

भावार्थ:—क्यों तूं और मैं यहां दोनों विद्यमान हैं कहीं भी हमारे दोनों में कोई भेद नहीं। हे नगनन्दिनि! तूं विष्णु रूप है और मैं शिव रूप हूं। अत: शिव तत्व द्विगुण भावको

प्राप्त हो गये हैं। शिवजी के हृदय में विष्णु रूप में स्वयं तूं ही स्थित है एवं विष्णु हृदय में मेरे रूप में सर्वदा शिव विराजमान रहते हैं ।४५६।

**रामस्त्वेष हि वैष्णवो नगसुते यातः स्वयं शैवतां**
**साक्षाद्देव शिवोऽस्त्ययं गणपतिर्यातोऽधुना वैष्णवः ।**
**प्रभ्वोश्चापि च बालयोः स्वसुतयोर्भेदो क्वचिन्नावयोः**
**सा राधावदतीत्थमेव गणपं क्रोडे निधायात्मनः ।४६०।**

**भावार्थः**—हे नगराजकुमारि ! यह राम स्वयं वैष्णव है अब स्वयं शिवरूप हो गया है। यह गणेश जी साक्षात् विष्णुरूप हो गये हैं। हमारे दोनों के स्वामियों में राम और गणेश दोनों बालकों में स्कन्द और रामा इन दोनों पुत्रों में एवं मेरे में व आप में परस्पर दोनों में अब कोई भेद नहीं रहा। इतना कहती हुई राधाने गणेश जी को अपनी गोद में बिठा लिया ४६०।

**मूर्ध्न्याघ्राय निजेन कोमल करेणामृष्य गण्डस्थले**
**पस्पर्शाथ कपोलके गणपतेः पूर्तिःक्षते तत्क्षणात् ।**
**जाताऽऽमोदभरानुनीतहृदया गौरी च सा राधया**
**रामं वै निजपादयोः निपतितं चोत्थाप्य स्वोत्पाणिना ।४६१**

**भावार्थः**—उसके माथे को चूमकर अपने कमल के समान कोमल हाथ से गालों पर हाथ फेरा फिर गणपति कपोलगत

दान्त टूटे घाव को स्पर्श किया तत्क्षण घाव पूर्ण स्वस्थ हो गया। राधा के इस चमत्कारमय व्यवहार से राधाके साथ अनुनय सम्पन्न हृदय होकर अपने चरणों पर गिरे हुए परशुराम को अपने ऊर्ध्वकृत हाथ से उठाकर।४६१

**दृष्ट्वा रामगणेशयोः सममतं कृष्णश्च स्कन्दं स्वयं**
**स्वाकृष्याङ्कगतं निधाय विधिना स्वोश्लिष्य प्रेम्णाधिकम्।**
**श्रीदामानमुपस्थितं शिवविभुः स्वोत्सङ्गमाकृष्य तं**
**प्रेम्णाऽऽस्वज्य ससत्कृतिं प्रियतमं स्वाशीर्भिरेवास्पृशत् ४६२**

भावार्थ–राम और गणेश में दोनों ओर एक एक जैसी ममतात्मक सत्कृति देखकर कृष्ण भगवान् जी ने भी स्कन्द जी को खींच कर अपनी गोद में बिठा कर प्रेमभाव से गले लगाकर प्यार करने लगे उधर शङ्कर जी ने गोलोक धामवासी राधाकृष्ण जी के पुत्र श्रीदामा जी को बैठे देखकर खींचा और अपनी गोद में बिठा कर प्रेम से गले लगाकर परम प्रियतम को प्रेम से आशीर्वचनों के साथ २ प्रेम द्वारा हाथों से अभिनन्दन भाव प्रकट किया।४६२

**इत्थं तेषु समेषु वै स परशूरामोऽप्युमोत्सङ्गत–**
**स्तूत्थायात्र कृताञ्जलिर्नतशिरस्तुष्टाव बद्धादरः।**
**निर्वैशिष्टच्युतं विशेषवदतोद्वैतं सदप्यद्वयं**
**नैर्गुण्यं सगुणात्मकं पृथगसौ स्तोतुं स्वयं प्रारभत्।४६३।**

भावार्थ—इस प्रकार उन सभी में उस परशुराम ने माता उमा की गोद से उठकर यहां दोनों हाथों की अञ्जलि बान्धकर, सिर झुकाकर पूर्ण आदर भाव से जिसका वैशिष्ट्य प्रकट नहीं किया जासकता तो उसकी विशेषता प्रकट करते हुए द्वैतभाव को भी अद्वैत में परिणत करते हुए, निर्गुण पर ब्रह्म को भी सगुण सिद्ध करते हुए अलग २ उसने स्वयं स्तुति करना प्रारम्भ करदी ४६३।

मालिनी—प्रकृति विकृति जातं विश्वमेतद्विधातुं
मम कियदनुभातं वैभवं तत्प्रमातुम् ।
अविदित तनुनामाऽभीष्टवस्त्वेकधामा
ऽभवदथ भवभामा पातु मां पूर्णकामा ।१।

प्रकटित गुणभानं कालसंख्या विधानं
सकलभवनिदानं कीर्त्यते यत्प्रधानम् ।
तदिह निखिलतातः सम्बभूवोक्षपातः
कृतकृतक निपातः पातु मामद्य मातः ।२।

दनुजकुल विनाशी लेखपाता विनाशी
प्रथम कुलविकाशी सर्वविद्या प्रकाशी ।
प्रसभ रचितकाशी भक्तदत्ता खिलाशी-
रवतु विजितपाशी मां सदा षण्मुखाशी ।३।

हर निकट निवासी कृष्णसेवा विलासी
प्रणत जनविभासी गोपकन्या प्रहासी ।
हरकृत बहुमानो गोपिकैशंकतानो
विदितबहु विधानो जायतां कीर्तिहा नो ।४।

प्रभुनियतमनायो नुन्नभक्तान्तरायो
हृत दुरित निकायो ज्ञानदाता परायोः ।
सकलगुण गरिष्ठो राधिकाङ्के निविष्टो
मम कृतमपराधं क्षन्तुमर्हत्वगाधम् ।५।

या राधाजगदुद्भव स्थितिलयेष्वाराध्यते वा जनैः
शब्दं बोधयतीश वक्त्रविगलत्प्रेमामृताऽऽस्वादनम् ।
रासेशी रसिकेश्वरी रमण हृन्निष्ठा निजानन्दिनी
नेत्री सा परिपातु मामवनतं राधेति या कीर्त्यते ६ ।

यस्या गर्भसमुद्भवो ह्यतिविराडयस्यांश भूतोविराट्
यन्नाभ्यम्बुरुहोद्भवेनं विधिनैकान्तोपदिष्टेन वै ।
सृष्टं सर्वमिदं चराचरमयं विश्वं च यद्रोमसु
ब्रह्माण्डानि विभान्ति तस्य जननी शश्वत्प्रसन्नास्त वः ।७

पायाद्यः स चराचरस्य जगतो व्यापी विभुः सच्चिदा-
नन्दाब्धिः प्रकटस्थितो विलसति प्रेमान्धया राधया ।

